TRIVANDRUM SANSKRIT SERIES.

NO. XXXV.

# THE MAṆISÂRA

(ANUMÂNAKHAṆḌA)

OF

GOPÎNÂTHA

EDITED

BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.



TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1914

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३५.

---

# मणिसारः

## (अनुमानखण्डः)

श्रीगोपीनाथविरचितः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।




स च

अनन्तशयने

**महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन**

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

---

कोळम्बाब्दाः १०८९, क्रैस्ताब्दाः १९१४.

# PREFACE.

The Manisàra gives a description of the substance Tattvachintàmani, the well-known work on Nyàya of Gangesopàdhyàya ; and the Anumànakhanda of this work is now placed before the public. The Pratyaksha-Khanda of the work is often referred to in this volume by the word प्रत्यक्षमणिसार, but this has not come to our hands; while the Sabda-Khanda obtained by us is incomplete. The edition of Anumànakhanda is based on two palm-leaf manuscripts, one of which (marked क.) in Malayalam character belongs to Panthalam Palace, and it is incomplete and somewhat incorrect. The other manuscript (marked ख.) lent by Mr. Sakti Sastrial of Ayikkudi is in Tamil Grantha character, and complete and correct.

The author of the Manisâra is Gopînâtha. The colophon in the Tarkabhâshâprakâsikâ, a commentary on Tarkabhâshâ of Kesavamisra, namely "सोमसुतकुलसमुद्भूतमहोपाध्यायभवनाथकुमारसुतगोपिनाथविरचितायां तर्कभाषाप्रकाशिकायां" shows that the commentary was written by a Gopînâtha, son of Bhavanâthakumâra. The author of the Manisâra and of Tarkabhâshâprakâsikâ might be identical ; for in dealing with the subject Arthâpatti (अर्थापत्ति) in Tarkabhâshâprakâsikâ, the author says:—"अर्थापत्तिर्नप्रमाणं मानाभावात् । यथा चैतत तथा प्रतिपादितं मणिसारे. that is, the subject has been explained by him in Manisara.

Gopînâtha often refers to Pakshadharamisra, the author of Âloka, a commentary on Tattvachintâmani, and Pakshadharamisra who is the same as Jayadeva, the author of the play called Prasannarâghava lived in the 16th Century A. D. The father of Sankaramisra, the author of Kanâdarahasya and other works on Nyâya is known as Bhavanâtha. If the Bhavanâtha mentioned by Gopînâtha be identical with the father of Sankaramisra, Gopinâtha might then be a contemporaneous kinsman of Sankaramisra. The latter (Sankaramisra) is the fourth in the succession of the pupils of Vâsudeva Bhattâchârya, the fellow-student of Jayadeva, and might therefore be placed a century later than Jayadeva.

Trivandrum. T. GANAPATI SÂSTRÎ.

# निवेदना ।

एष श्री**गङ्गेशोपाध्यायेन** प्रणीतस्य **तत्त्वचिन्तामणि**नाम्नो न्यायग्रन्थस्य सारप्रतिपादको **मणिसारो** नाम, यस्यायमनुमानखण्ड इदानीं प्रकाश्यते। अनुमानखण्डे प्रत्यक्ष**मणिसार**शब्देन* तत्र तत्रास्य प्रत्यक्षखण्डः स्मर्यते। किन्त्वसौ नोपलब्धोऽस्माभिः। शब्दखण्डस्त्वस्मद्धस्तेऽस्ति। परं तु सोऽसमग्रः। अनुमानखण्डस्य संशोधनाधारभूतावुभावादर्शौ। तत्रैकः **पन्तलराज**सम्बन्धी केरलीयलिपिरसमग्रो नातिशुद्धः क. संज्ञः। अन्यस्तु **आयकुटि शक्ति**शास्त्रिस्वामिकः समग्रः शुद्धो द्रमिलग्रन्थलिपिः ख. संज्ञः।

अस्य प्रणेता श्री**गोपीनाथः**। **केशव**मिश्रकृताया**स्तर्कभाषाया** व्याख्यायां **तर्कभाषाप्रकाशिका**यां "सोमसुतकुलसमुद्भूतमहोपाध्याय**भवनाथ**कुमारसुत**गोपीनाथ**विरचितायां **तर्कभाषाप्रकाशिका**यां प्रमाणपरिच्छेदः समाप्तः" इति सविशेषणो यो **गोपीनाथः** कीर्त्यते, स एवायमिति प्रतिभाति, यस्मात् **तर्कभाषाप्रकाशिका**यां स्वकर्तव्यतया प्रसक्तमर्थनिरूपणं स **मणिसारे** कृतं मन्यते। तत्र ह्यर्थापत्तिविचारे स एवमाह— "अर्थापत्तिर्न प्रमाणं, मानाभावात्। यथा चैतत् तथा प्रतिपादितं **मणिसारे**" इति। एष **मणिसारे पक्षधर**मिश्रं **तत्त्वचिन्तामणि**व्याख्यानस्या**लोक**स्य कर्तारं बहुशः स्मरति। **पक्षधर**मिश्र इति **जयदेव**मिश्र एवोच्यते। तमेव **प्रसन्नराघव**नाटकस्यापि कर्तारं वदन्ति। स च क्रैस्ताब्दीये षोडशे शतके स्थित इति प्रसिद्धम्। कणादरहस्यादिकर्तुः **शङ्कर**मिश्रस्य पिता कश्चन **भवनाथः** श्रूयते। अयं **गोपीनाथ**निर्दिष्टाद् **भवनाथाद्** यदि न भिन्नः, तर्हि **गोपीनाथेन शङ्कर**मिश्रस्य समकालेन दायादेन भवितव्यम्। **शङ्कर**मिश्रस्तु **जयदेव**सहाध्यायिनो **वासुदेव**भट्टाचार्यसार्वभौमस्य शिष्यपरम्परायां चतुर्थो गण्यत इति **जयदेवा**च्छतावरवर्षार्वाचीनः सम्भाव्यते।

अनन्तशयनम्. **त. गणपतिशास्त्री.**

---

* सप्तमं पृष्ठं दृश्यताम्.

॥ श्रीः ॥

गोपीनाथविरचितः

# मणिसारः ।

## अनुमानखण्डः ।

---

### सङ्गतिग्रन्थः ।

क्रीडाकोपकषायमायतमपाकर्तुं नते शङ्करे
सद्यः स्मेरचमूरुलाञ्छनकलासम्पर्कसङ्कोचिताः ।
सावष्टम्भसुरारिसङ्घविविधाहङ्कारकूटच्छिदो
रुद्राणीचरणारविन्दरुचयो विघ्नं विनिघ्नन्तु नः ॥

निर्गलितं मणिमध्यादालोकादौ च विस्तीर्णम् ।
निष्कृष्य युक्तिसारं गोपीनाथस्ततस्तनुते ॥

प्रत्यक्षानुमानयोरुपजीव्योपजीवकभावसङ्गत्या प्रत्यक्षानन्तरमनुमानं निरूप्यते । यद्यपि लिङ्गपक्षव्याप्त्यादिज्ञानानामनुमितिरूपत्वानियमेऽनवस्थाप्रसङ्गेन प्रत्यक्षरूपत्वमङ्गीकरणीयमेव । अतीन्द्रियसाध्यकादिस्थलेऽपि परम्परया प्रत्यक्षापेक्षित्वमिति यथा, तथानुमित्युपनीतप्रत्यक्षे अदृष्टद्वारा जन्यप्रत्यक्षमात्रे चानुमितेरप्युपजीव्यत्वमस्तीति तन्निरूपणमेव प्रथममस्तु । तथाप्यनुभवत्वव्याप्याया यज्जातेः प्रमाणविभाजकत्वं, तदवच्छिन्नं प्रत्युपजीव्यत्वमिह विवक्षितम् । अस्ति चानुमितित्वावच्छिन्ने प्रत्यक्षस्य तथात्वं, न तु प्रत्यक्षत्वावच्छिन्नेऽनुमितेरपि, ईश्वरप्रत्यक्षे तदभावात् । एवमनुमितिकरणस्य व्याप्त्यादिज्ञानस्यापि प्रत्यक्षोपजीवकतानियम एव, न तु प्रत्यक्षकरणस्यापि तदुपजीवकत्वं नियतं, श्रोत्रादौ तदभावादिति । वस्तुतस्तु प्रत्यक्षानुमानयोरुभयोरप्युपजीव्योपजीवकभावादुभयत्रापि सङ्गतिरस्तु । न चैवमनुमाननिरूपणस्यापि प्राथमिकत्वापातः । निरूपणप्राथ-

म्यस्येच्छाधीनतया सङ्गत्यनियम्यत्वात् । सङ्गतेश्च पूर्वापरग्रन्थैकवाक्यतामात्रप्रयोजकत्वात् । अन्यथा दश दाडिमानीतिवद् उपेक्षणीयतापत्तेः । यद्वा आनन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयः सङ्गतिः । तच्च यद्यपि कारणत्ववत् कार्यत्वमपि, कारणे निरूपिते किमस्य कार्यमिति जिज्ञासावत् कार्ये निरूपिते किमस्य कारणमिति जिज्ञासाया अपि भावात्, तथापि निरूपणप्राथम्ये इच्छैव नियामिकेत्युक्तम् । एवमनुमानोपमानयोरप्युपजीव्योपजीवकभाव एव सङ्गतिः । लाघवज्ञानसहकारेण गवयपदस्य गवयत्वविशिष्टे शक्तिज्ञानमेव ह्युपमितिः । सा च शक्तेः पूर्वं ज्ञाने सति स्यात् । तज्ज्ञानं च नानुमानमन्तरेण, शक्तेरीश्वरेच्छाया अतीन्द्रियत्वात् । तथा चोपमितित्वावच्छिन्नोपजीव्यत्वमेव तत्रापि नियामकमिति क्वचिदनुमानस्यापि तदुपजीवकत्वे न दोषः । यद्वा सङ्गतेरुभयसाधारण्येऽपि प्रागुक्तरीत्या अनुमाननिरूपणप्राथम्यमिति दिक् ॥

इति सङ्गतिग्रन्थः ।

---

## अथानुमितिलक्षणम् ।

'तत्रानुमितिकरणत्वमनुमानत्वम् । अनुमितिश्च व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमि'ति मणिकृतः । नन्विह कः समासः । न तावद् व्याप्तिविशिष्टः पक्षधर्मश्चेति द्वन्द्वः । प्रमानुमित्यव्याप्तेः । वास्तवपदार्थभेदस्थल एव तस्य भावात् । अत्र च तदभावात् । न च ज्ञाप्यपदार्थभेदे द्वन्द्व इत्यपि । तथा सत्यसंभवात् । परामर्शस्याभेदावगाहितयान्योन्यभेदानवगाहित्वात् । नापि कर्मधारयः । तथा सति भ्रमानुमित्यव्याप्तेः । कर्मधारयस्य पदार्थाभेद एव भावात् । तत्र च तदभावात् । अत एव न षष्ठीतत्पुरुषोऽपि । भ्रमानुमित्यव्याप्तेर्दुष्परिहरत्वादिति ।

अत्र पक्षधरमिश्राः—द्वन्द्व एव समासः । न चोक्तदोषः । पदार्थभेद इव पदार्थतावच्छेदकभेदेऽपि तस्य साधुत्वात् । प्रयोगानुरोधेन व्याकरणस्मृतिप्रवृत्तेः । तस्य चोभयत्र दर्शनात् । अन्यथा नीलघटयोरभेदः संसर्ग इत्यादौ

साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुरित्यादौ च का गतिः । तथा च प्रमानुमितावपि पदार्थतावच्छेदकभेदसत्त्वाद् नाव्याप्तिः । यद्वा व्याप्तिविशिष्टादिपदं व्याप्तिविशिष्टत्वादिपरम् । तथा च पदार्थभेदेनैव द्वन्द्व इति पक्षेऽपि नानुपपत्तिः । न चैवमन्यत्र व्याप्तिविशिष्टत्वमन्यत्र पक्षधर्मत्वं च गृहीतं यत्र, ततस्तदनुव्यवसायः, तत्रानुव्यवसायेऽतिव्याप्तिरिति वाच्यम् । एकत्र धर्मिणीति विशेषणदानात् । अत एव व्याप्तिविषयकं पक्षधर्मताज्ञानमित्यपि । ज्ञानेन सह एकत्रेति विशेषणस्य तत्राप्यावश्यकत्वादित्याहुः ।

अत्रेदं शङ्क्यते—एवं सत्येकशेषस्य द्वन्द्वापवादकता न स्यात् । पदार्थतावच्छेदकस्य घटत्वस्य भेदाभावेन द्वन्द्वप्रसक्तेरेवाभावात् । निषेधस्य प्रसक्तिपूर्वकत्वात् । किञ्च 'सर्वो द्वन्द्वो विभाषैकवद् भवती'त्यपि व्यर्थं, पदार्थतावच्छेदकभेदस्थलीयद्वन्द्वे धर्मिण एकत्वाद् एकवद्भावस्य स्वत एव सिद्धत्वात् । अपि च नीलघटयोरित्यादौ द्वित्वान्वयानुपपत्तिः, धर्मिणस्तदन्वयायोग्यत्वात् । न चात एवावच्छेदकान्वितं तत्, तथाव्युत्पत्तेः । विभक्त्युपस्थाप्यसङ्ख्यादेर्विशेष्यान्वयनियमात् । अन्यथा एकत्र दण्डिपुरुषावित्यादिप्रयोगापत्तिः । न चेष्टापत्तिः । तथा सति 'न ह्येकत्र दण्डिनि दण्डिपुरुषौ गच्छत इति वक्तारो भवन्ती'ति वार्तिकविरोधात् । न चैवं नीलघटयोरिति प्रयोगानुपपत्तिः । तस्य नीलत्वघटत्वयोरित्यर्थात् । अभेद इत्यस्याप्याश्रयाभेद इत्यर्थात् । किं बहुना, एवं सति कर्मधारयोच्छेद एव, पदार्थतावच्छेदकभेदस्य तत्रापि भावेन द्वन्द्वस्याप्रतिहतत्वादिति । यद्वेत्यनुपपन्नम् । एकत्र धर्मिणीति विशेषणप्रक्षेपेऽपि धूमत्वेन वह्निव्याप्तिग्रहे द्रव्यत्वेन पक्षधर्मताज्ञानेऽनुमित्यनुदयात् तज्जन्यसमूहालम्बनातिव्याप्तिः । न च यद्धर्मविशिष्टत्वेन ज्ञायमाने धर्मिणि व्याप्तिविशिष्टत्वधीः, तद्धर्मवत्त्वेन पक्षधर्मताधीर्विवक्षितेति नोक्तदोष इति वाच्यम् । द्रव्यं धूमो वह्निव्याप्यो द्रव्यवांश्चायमिति ज्ञानजन्यानुव्यवसायातिव्याप्तेस्तथापि भावात् । न च यावद्धर्मविशिष्टत्वेनोपस्थिते व्याप्तिवैशिष्ट्यधीः, तावद्धर्मावच्छिन्नपक्षधर्मताधीर्विवक्षिता । तत्र च धूमत्वेनाप्युपस्थिते व्याप्तिबुद्धेः, तस्य च पक्षधर्मताबुद्धावविषयत्वादिति वाच्यम् । तथा सत्युदाहृतस्थल एव द्रव्यत्वपरित्यागेन पक्षधर्मताज्ञानादनुमितिर्न स्यात्, उक्तविवक्षायास्तत्राभावात् । न च यद्धर्मपुरस्कारेण व्याप्तिधीः, तद्धर्मपुरस्कारेण पक्षधर्मताधीरित्यर्थः । द्रव्यं धूम इत्यत्र द्रव्यत्वस्य

न पुरस्कार इति वाच्यम् । तथाप्येकत्र धर्मिणीत्यत्रैकत्वं वास्तवं वा ज्ञातं वा विवक्षितम् । नाद्यः । भ्रमानुमित्यव्याप्तेः । नान्त्यः । परामर्शे धर्म्यैक्यभाने मानाभावेनासंभवात् । किञ्च, एतद्विशेषणे दत्तेऽपि पक्षतासहकृतत्वविवक्षाया आवश्यकत्वेन तत एवोक्तसमूहालम्बनातिव्याप्तिवारणमिति किमुक्तविशेषणेनेति ।

अत्रेदं प्रतिभाति—नहि वयं पदार्थतावच्छेदकभेदत्वेन द्वन्द्वसाधुतां ब्रूमः, येन द्वन्द्वापवाद(त्वा)नुपपत्तिः स्यात् । किन्तु पदज्ञानजन्यप्रतीतिविषयभेदत्वेन । तच्च विशेष्यविशेषणभेदसाधारणमिति विशेष्यभेदादेकशेषस्थलेऽपि द्वन्द्वप्रसक्तौ सरूपेत्यादिसूत्रेण तदपवादात् । सर्वो द्वन्द्व इत्यत्र सर्वपदं संकुचितमेव । द्वित्वं चानन्वितमेव । द्विवचनं प्रयोगसाधु(त्व)मात्रं धर्म्यैक्यस्थले । यद्वा अवच्छेदकान्वय्येव तत् । विशेष्यान्वयस्यौत्सर्गिकत्वात् तस्य च बाधकेन निरासात् । न चैकत्रापि दण्डिपुरुषावित्यादिप्रसङ्गः । साधुत्वे इष्टापत्तेः । पूर्वाप्रयोगाच्च न प्रयोग इति । कर्मधारयोच्छेदोऽपि नास्ति । पदार्थभेदविवक्षायां तत्रैव च पदार्थतावच्छेदकभेदविवक्षायां कर्मधारयद्वन्द्वप्रवृत्तेरिति । एकत्र धर्मिणीत्यत्रापि नोक्तदोषः । पक्षतासहकृतत्वविवक्षायामपि व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वेन जनकत्वमवश्यं वाच्यमेव, वक्तव्ययुक्तेः । तथा च विशेषणं विनासम्भव एव, उक्तरूपेणातिप्रसक्तस्याकारणतावच्छेदकत्वात् । किन्त्वेकधर्मिकतदुभयवैशिष्ट्यज्ञानत्वेनैव जनकत्वम् । अत एवैकत्वभानमावश्यकमिति दिक् ।

उपाध्यायास्तु—व्याप्तिविशिष्टश्चासौ पक्षधर्मश्चेति कर्मधारय एव समासः । तदुत्तरतल्प्रत्ययेन पदार्थतावच्छेदकद्वयसामानाधिकरण्यशक्तेन तदुभयसामानाधिकरण्यप्राप्तौ तत्र च ज्ञानान्वयेन सामानाधिकरण्यावगाहिज्ञानजन्यत्वमर्थो लभ्यत इति न भ्रमानुमितावव्याप्तिरित्याहुः । तच्चिन्त्यम् । अवान्तरवाक्यार्थस्य व्याप्तिविशिष्टत्वपक्षधर्मत्वोभयसामानाधिकरण्यस्य बाधेन महावाक्यार्थस्य ज्ञानान्वयस्य दूरपरास्तत्वाद् भ्रमानुमित्यव्याप्तेरपरिहारात् । ज्ञानरूपसम्बन्धस्य यथाकथञ्चित् सामानाधिकरण्यघटकत्वेन तदव्याप्तिनिरसनेऽप्यसम्भवस्य दुरुद्धरत्वात् । तथाहि—वह्निव्याप्यधूमवानिति परामर्शोऽनुमितिहेतुः । न चासौ स्वप्रकारीभूतव्याप्त्यादेर्वैशिष्ट्यं संसर्गमर्यादया विषयीकुर्वन् तद्वैशिष्ट्यमपि सामानाधिकरण्यरूपं विषयीकरोति । तथा सति भासमानवैशिष्ट्यप्रतियोगितया

वैशिष्ट्यस्य प्रकारतापत्तेः । न च विशिष्टबुद्धौ विशेष्यविशेषणसंबन्धमात्रविषयत्वे दण्डीति बुद्धेः दण्डपुरुषसंयोगा इति ज्ञानाद् भेदो न स्यादिति वैशिष्ट्यसम्बन्धोऽधिको विशिष्टधीविषयोऽङ्गीकार्य एव । अत एव भासमानवैशिष्ट्यप्रतियोगित्वपर्यन्तं प्रकारतालक्षणमिति वाच्यम् । तथापि दण्डपुरुषसंयोगतत्सम्बन्धा इत्यतो दण्डीत्यस्य भेदानुपपत्तेः समूहालम्बनाद् भेदकान्तरस्यैव वाच्यत्वात् । अत एव समूहालम्बने सम्बन्धतावच्छेदकगोचरत्वं विशिष्टबुद्धौ तदगोचरत्वमित्येव भेदकमिति पक्षधरमिश्राः । यदि च विषयभेद एव धीभेदक इति मतं, तथापि नानुपपत्तिः । विशिष्टबुद्धौ विशेषणप्रतियोगिकस्य विशेष्यनिष्ठस्य स्वरूपसम्बन्धस्य विषयत्वात् । विशेषणसंबन्धनिरूपितस्वरूपसंबन्धापेक्षया विशेषणसंबन्धस्य लघुत्वात् । यथा च विशेषणादिनिरूपितस्वरूपसम्बन्धस्य विशिष्टधीविषयत्वेऽप्युपर्जीव्यतया लघुतया च समवायसिद्धिः, तथा प्रत्य(क्षं निरूपित?क्ष)मणिसारे विवेचितम् । ननु तथापि व्यभिचारिहेतुकानुमितौ लक्षणमिदमव्याप्तं, व्याप्तेस्तत्रासत्तया ज्ञानाभावात् । भ्रमस्यापि प्रमापूर्वकत्वात् । न च अन्यत्र गृहीतव्याप्तेस्तत्राप्यारोप इति वाच्यम् । व्याप्तिर्हि प्रतिसाध्यं प्रतिसाधनं च तत्तद्व्यक्तिघटिततया भिन्ना । तथा च तत्साधने तत्साध्यनिरूपितव्याप्तिज्ञानमेव वाच्यम् । अन्यथातिप्रसङ्गात् । तच्चाप्रसिद्धमिति चेद्, न । तत्साधनाधिकरणे साध्यं साध्ये च तन्निष्ठात्यन्ताभावाप्रतियोगित्वमवगाहते यद् ज्ञानं, तस्यैव व्याप्तिज्ञानपदेन विवक्षितत्वात् तस्य तत्रापि सत्त्वादिति । नन्वेवमपि व्यतिरेक्यनुमितौ लक्षणमिदमव्याप्तं, तत्रान्वये पक्षधर्मतायाः व्यतिरेके च व्याप्तेर्ज्ञानेन तदुभयविशिष्टज्ञानाभावादिति चेद्, न । व्यतिरेकव्याप्तिज्ञानस्यापि साधनसाध्यव्यभिचारधीविरोधितया स्वव्यभिचारधीविरोधिव्याप्तिज्ञानस्य विवक्षितस्य सत्त्वात् । न च तथापि परम्परासम्बन्धेन व्याप्तिपक्षधर्मतयोर्वैशिष्ट्यज्ञानस्य विवक्षितत्वे वह्निव्याप्यधूमजनकार्द्रेन्धनवानयमिति ज्ञानादनुमित्यापत्त्या साक्षात्सम्बन्धेन तदुभयवैशिष्ट्यज्ञानं वाच्यम् । तच्च व्यतिरेकिणि नास्त्येवेत्यव्याप्तिरेवेति वाच्यम् । यादृशं वैशिष्ट्यज्ञानं पक्षधर्मे व्यभिचारधियं विरुणद्धि, साक्षात्परम्परोदासीनस्य तस्यैव व्याप्तिवैशिष्ट्यज्ञानस्य विवक्षितत्वात् । यथा च व्यतिरेकव्याप्तिज्ञानमन्वय(स्य ?)व्यभिचारधीविरोधि(ता ?) तथा वक्ष्यामः । यद्व्यतिरेकसहचारेणान्वयव्याप्तिर्गृह्यत इति मतेन लक्षणमिदम् । तेन नाव्याप्तिशङ्का । नन्वेवमपि संशयोत्तरप्रत्यक्षे लक्षण-

मतिव्याप्तं, विशेषदर्शनजन्यत्वात् तस्य । तथा व्याप्तिविशिष्टपक्षधर्मत्वाभावज्ञाने प्रतियोगिज्ञानत्वेन परामर्शजन्येऽतिव्याप्तिः । तथा व्याप्तिविशिष्टपक्षधर्मतावानयमिति ज्ञाने विशेषणज्ञानत्वेन परामर्शजन्येऽतिव्याप्तिः । तथा परामर्शानुव्यवसाये विषयत्वेन परामर्शजन्येऽतिव्याप्तिः । तथा पूर्वानुभवत्वेन परामर्शजन्ये व्याप्तिविशिष्टपक्षधर्मत्वस्मरणेऽतिव्याप्तिः । तथा अतिदेशवाक्यार्थज्ञानत्वेन परामर्शजन्यायामुपमितावतिव्याप्तिः । तथा उपनयावान्तरवाक्यार्थज्ञानजन्यन्यायजन्यशाब्दज्ञानेऽतिव्याप्तिः । किं बहुना, भगवद्व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यतया जन्यज्ञानमात्र एवातिव्याप्तिरिति ।

अत्र केचित्—तत्प्रत्यक्षानुमित्योर्वैजात्यादवश्यं सामग्रीवैलक्षण्यं वाच्यम् । तथा चानुमितौ परामर्शः, प्रत्यक्षे च करादि पुरुषत्वव्याप्यं करादिमांश्चायमिति ज्ञानद्वयं हेतुरिति संशयोत्तरप्रत्यक्षे परामर्शाजन्यतया नातिव्याप्तिरित्याहुः । तच्चिन्त्यम् । लाघवेनानुमिताविव प्रत्यक्षेऽपि विशिष्टज्ञानस्यैव हेतुत्वाद्, अन्यथा वैपरीत्यापत्तेः, विनिगमकाभावादिति पक्षधरमिश्राः । अत्र प्रत्यक्षानुमित्योरुभयोरपि परामर्शजन्यत्वे संशयोत्तरप्रत्यक्षेऽनुमित्यनुत्पत्तये प्रत्यक्षसामग्रीबलवत्त्वं कल्प्यमिति महद् गौरवं स्यात् । तद्वरं ज्ञानद्वयमेव प्रत्यक्षहेतुरस्त्विति नव्यदूषणं भव्यम् । लाघवेन विशिष्टज्ञानहेतुत्वसिद्धौ प्रत्यक्षसामग्रीप्रतिबन्धकत्वकल्पनस्य फलमुखत्वादिति न किञ्चिदेतत् । अन्ये तु व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यमात्रवृत्तिजातीयत्वमर्थः । अनुमितित्वं तथा, प्रत्यक्षत्वादिकं च न तथेति न प्रत्यक्षादौ क्वाप्यतिव्याप्तिः । संशयोत्तरप्रत्यक्षत्वादिकं च न जातिः, चाक्षुषत्वादिना सङ्करादित्याहुः । तदपि चिन्त्यम् । व्याप्यधर्मपुरस्कारप्रवृत्तातिदेशवाक्यप्रभवोपमितिमन्तरेण यत्रोपमित्यन्तराभावः, तत्र शरीरजन्यतावच्छेदकजातेरुपमितिवृत्तेस्तथात्वेन तादृशोपमित्यतिव्याप्तेस्तादवस्थ्यात् । न च शरीरजन्यतावच्छेदकजातिः सर्वज्ञानसाधारण्येकैव, तथा च तस्याः प्रत्यक्षादिवृत्तितया न तज्जन्यमात्रवृत्तित्वमिति नातिव्याप्तिः, प्रत्यक्षत्वादेरेव तद्व्याप्तस्य नानात्वेन सङ्करशङ्काविरहादिति वाच्यम् । तथा सति नानापुरुषानुमित्यादावनुगतव्यवहारानापत्तेरिति पक्षधरमिश्राः ।

अत्र शङ्क्यते—एवं सति शरीरजन्यतावच्छेदकजातिनानात्वेऽपि प्रत्यक्षानुमित्यादिसाधारणस्य शरीरजन्यत्वानुगतव्यवहारस्योच्छेद एव । यथाकथञ्चिदनुगतोपाधिना तत्समर्थनेऽनुमित्याद्यनुगतव्यवहारेऽपि समानमिति ।

अत्रेदं प्रतिभाति — अनुमितित्वादिजातिरनुमित्यादिपदवाच्यतावच्छेदकतया अनुमिनोमीत्याद्यनुव्यवसायेन च सिद्धा । सा च सिद्धिनैकत्वबाधे बाधितैव स्यादिति नानात्वेऽनुमितित्वाद्यसिद्धिप्रसङ्ग एव । शरीरजन्यतावच्छेदकजातेश्च व्याप्यतावच्छेदकतया सिद्धिरिति धूमत्वालोकत्ववदननुगमेऽप्यदोष इति विनिगमकम् । किञ्च, शरीरजन्यतावच्छेदकजाते( नै ? रै)क्ये प्रत्यक्षत्वादेस्तद्व्याप्यस्यानेकत्वे प्रतिशरीरमन्यत्राक्लृप्तशरीरजन्यतावच्छेदकजातेः तद्व्याप्यजातिचतुष्टयस्य च कल्पने जातिपञ्चककल्पनापत्तिः । शरीरजन्यतावच्छेदकनानात्वे चान्यत्राक्लृप्तजातिचतुष्टयमेव कल्प्यमिति लाघवम् । वस्तुतस्तु शरीरजन्यतावच्छेदकजातेरैक्येऽपि तद्व्याप्योपमितित्वमादाय लक्षणातिव्याप्तिर्दुर्वारैवेति नायं पन्थाः ।

तस्मादिदमत्राभिप्रेतं मणिकृतः — अप्रामाण्यशङ्काशून्यव्याप्तिविशिष्टपक्षधर्मतानिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयज्ञानमनुमितिरिति । संशयोत्तरप्रत्यक्षे च नाप्रामाण्यशङ्काशून्यपरामर्शत्वावच्छिन्ना कारणता । तथा सति पीतः शङ्ख इति ज्ञानकाले श्वैत्यव्याप्यशङ्खत्ववानिति परामर्शात् श्वैत्यप्रत्यक्षापत्तेः । किन्तु ग्राह्यविपरीतज्ञानविरोधिविशेषदर्शनत्वेन प्रत्यक्षहेतुत्वमिति न तत्रातिव्याप्तिः । अभावज्ञानेऽपि विशिष्टज्ञाने च प्रतियोगिज्ञानत्वेन विशेषणज्ञानत्वेन च हेतुता, न तु तत्त्वेन । यथाकथञ्चित् तथा भावेऽपि नाप्रामाण्यशङ्काशून्यत्वाद्युपयोग इति न तत्रातिव्याप्तिः । यत्तु तत्र विशेषणविषयकत्वमेव हेतुतावच्छेदकं न तु ज्ञानत्वान्तर्भावोऽपीति गौडसमाधानं, तत्तु न, प्रकृतेऽपि तथात्वात् । ज्ञानभिन्ने विषयत्वं नास्तीति प्रत्यक्षमणिसारे प्रतिपादितत्वात् । तस्माज्ज्ञानत्वनियतं तदिति सर्वत्र ज्ञानत्वान्तर्भावः, न तु व्यावर्तकतया । उपमितिशाब्दयोरपि अवान्तरवाक्यार्थज्ञानत्वेनातिदेशवाक्यार्थज्ञानत्वेन च हेतुत्वान्नातिव्याप्तिः । न च तद्विषयकप्रत्यक्षे तत्त्वेनापि हेतुत्वमिति वाच्यम् । परामर्शानुव्यवसाये व्याप्तिज्ञानं पक्षधर्मताज्ञानं च विषयः । तच्चान्यत्र व्याप्तिज्ञानत्वेन तदनुव्यवसाये पक्षधर्मताज्ञानत्वेन तदनुव्यवसाये च क्लृप्तहेतुतयैवार्थसमाजमहिम्ना संभवतीति न परामर्शत्वेन तत्र हेतुतेति । अनुमितौ चातिप्रसङ्गभीत्या तथा हेतुत्वम् । अत एव न स्मृतावतिव्याप्तिः । अप्रामाण्यशङ्कयापि स्मृतेरुत्पादेन तत्र तथा जनकत्वाभावात् । यत्तु तत्र निश्चयरूपानुभवत्वपर्यन्तं हेतुतावच्छेदकमिति, तन्न । अनुभवत्वपर्यन्तस्य गौरवेण स्मृत्यनन्तरमपि स्मृतिदर्शनेन

व्यर्थत्वात् । भगवज्ज्ञानमादायापि नातिव्याप्तिः, तस्योपादानप्रत्यक्षतया हेतुत्वेनोक्तरूपेणाजनकत्वादिति ।

पक्षधरमिश्रास्तु — पक्षतासहकृतपरामर्शजन्यत्वं विवक्षितम् । प्रत्यक्षादौ क्वापि न पक्षता हेतुरिति नातिव्याप्तिः । न च पक्षतासहकृतव्याप्तिज्ञानजन्यत्वमेवास्तु । तदुभयप्रत्यक्षेऽतिव्याप्तेः । न च परामर्शपक्षतोभयप्रत्यक्षे तथाप्यतिव्याप्तिः । तदुभयोरनुमित्युत्पादनियततया प्रत्यक्षानुत्पादात् । न च पक्षताजन्यत्वमेव लक्षणमस्तु । सामान्यप्रत्यासत्तिभू (य? तया) तया जनिते प्रत्यक्षेऽतिव्याप्तेः, सिद्ध्यभावरूपपक्षताया योग्यतया विषयत्वेन तज्जन्यप्रत्यक्षेऽतिव्याप्तेश्च पक्षतात्वेन जनकत्वस्य लक्षणाप्रवेशादित्याहुः ।

तत्र विचार्यते — यत्र बाधाद्यवतारेण पक्षतापरामर्शाभ्यामनुमितिर्न जनिता, तत्र तदुभयसमूहालम्बनेऽतिव्याप्तिर्दुर्वारा । न च हेतुतावच्छेदकभेदादुभयोर्जनकत्वं विवक्षितं, समूहालम्बने च न तथा, विषयत्वस्यैव हेतुतावच्छेदकत्वादिति वाच्यम् । सामान्यतस्तथात्वेऽपि स्वप्रत्यक्षे स्वत्वेन हेतुत्वादतिव्याप्तेस्तादवस्थ्यात् । किञ्च, पक्षताजन्यत्वमेवास्तु, व्यर्थमन्यत् । पक्षताप्रत्यासत्तिकप्रत्यक्षे पक्षताया अहेतुत्वात्, सामान्यज्ञानस्यैव प्रत्यक्षहेतुत्वादिति वक्ष्यमाणत्वात् । अन्यथा पक्षतापरामर्शोभयप्रत्यासत्तिकप्रत्यक्षातिव्याप्तेर्दुष्परिहरत्वात् । पक्षतायाः सिद्ध्यभावरूपाया योग्यप्रतियोगिकत्वेऽप्यप्रत्यक्षत्वाच्च न तत्प्रत्यक्षातिव्याप्तिवारणार्थमपि परामर्शपदसार्थकता । न च सिद्ध्यभावरूपपक्षता कुतो न प्रत्यक्षेति वाच्यम् । प्रतियोगियोग्यतामात्रस्याभावयोग्यतायामतन्त्रत्वात् । अन्यथा गुरुत्वावच्छिन्नघटाभावस्यापि प्रत्यक्षत्वापातात् । तथा च प्रतियोगितावच्छेदकावच्छिन्नयोग्यता तन्त्रं वाच्या । सा च नेह । सि(द्ध?)-साधयिषानन्तरसिद्ध्यननुगुणानन्तरितकालस्य प्रतियोगितावच्छेदकप्रविष्टस्यायोग्यत्वादिति ।

अत्र प्रतिभाति — अनुभवत्वसाक्षाद्व्याप्यजात्या यज्जातीयज्ञानं प्रति पक्षतापरामर्शयोरन्यतरमन्तरेणान्यतरस्य न जनकत्वं, तत्त्वमिह विवक्षितम् । परामर्शपक्षताप्रत्यक्षादौ च न तथा । केवलस्यापि परामर्शादेः प्रत्यक्षजनकत्वात् । अनुमितित्वावच्छिन्नं प्रति तु मिलितयोरेव जनकत्वमिति न काप्यतिव्याप्तिशङ्का । यद्वा

परापरभावापन्नकार्यतावच्छेदकवति कार्यतावच्छेदकैक्ये वा पक्षतापरामर्शयोः सहकारित्वं विवक्षितम् । समूहालम्बने तु न तथा । स्वप्रत्यक्षत्वस्य कार्यतावच्छेदकतया व्यभिचारेण व्याप्यव्यापकभावाभावादैक्याभावाच्च आर्थः समाजः । न चैवं सति पक्षतासहकृतव्याप्तिज्ञानजन्यत्वं तत्सहकृतपक्षधर्मताज्ञानजन्यत्वं वास्तु, किं विशिष्टज्ञानजन्यत्वेनेति वाच्यम् । विशिष्टज्ञानत्वावच्छिन्नकारणताया व्याप्तिज्ञानत्वाद्यवच्छिन्नकारणतापेक्षया भिन्नाया एव लक्षणप्रवेशात् तत्र च वैयर्थ्याभावात् । लक्षणद्वय एव तात्पर्यमित्यपि केचित् । वस्तुतस्तु — व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वेन जनकता विवक्षितेति न परामर्शानुव्यवसायादावतिव्याप्तिः । न चैवं पक्षतासहकृतत्वविशेषणवैयर्थ्यम् । संशयोत्तरप्रत्यक्षातिव्याप्तिवारणाय तदावश्यकत्वात् । पक्षतापदेन च प्रकृते सिद्ध्यभाव एव विवक्षितः । स च योग्य एवेति तत्प्रत्यक्षातिव्याप्तिवारणाय परामर्शजन्यत्वमपि विशेषणमावश्यकमिति न कोऽपि दोष इति दिक् ।

उपाध्यायास्तु — विरोध्यनुपरागकालीनस्वजनकस्वरूपयोग्यपक्षतोपरागकालीनपरामर्शाव्यवहितजन्यत्वं लक्षणार्थः । पक्षता च सिषाधयिषाविरहसहकृतसिद्ध्यनुमानातिरिक्तसाधकमानान्यान्याभावरूपा । (न च ? सा च न) प्रत्यक्षरूपमानस्थले संशयोत्तरप्रत्यक्ष इति न तत्रातिव्याप्तिः । विरोधिज्ञानानुपरागकालीनत्वविशेषणाच्च बाधादिकालीनपरामर्शानुव्यवसायवारणम् । अव्यवधानेन च ततो न स्मृत्यनुव्यवसायाविति न तयोरप्यतिव्याप्तिः । अवान्तरवाक्यार्थज्ञानं च न महावाक्यार्थधीहेतुरिति न न्यायजन्यशाब्दज्ञानेऽप्यतिव्याप्तिः । उक्तोपमितावपि नातिव्याप्तिः । अनुमितिसामग्रीबलवत्त्वेनानुमितेरेव प्रथमं तत्रोत्पादात् । उत्तरकाले उपमित्युत्पत्तावप्यव्यवधानाभावात् । न च तत्पदादिना यत्र व्याप्तिविशिष्टपक्षधर्मत्वोपस्थितिः, तत्र पदार्थोपस्थितित्वेन शाब्दबुद्धौ परामर्शस्य हेतुत्वादतिव्याप्तिरिति वाच्यम् । तत्र परामर्शरूपसामग्र्याः शाब्दानुमितिसाधारण्येन विनिगमनाविरहेणैकस्यानुत्पत्तेः । परामर्शानन्तरमनुव्यवसायापत्त्या भिन्ने विषयेऽनुमितिसामग्रीबलवत्त्वस्य योग्यताज्ञानाद्यनुव्यवसायापत्त्या शाब्दधीसामग्रीबलवत्त्वस्यापि वाच्यत्वात् । यदा शाब्दबोधेच्छया तत्र शाब्दबोधोत्पत्तिः, तदा शब्दाव्यापारत्वमपि परामर्शे विशेषणमिति वदन्ति ।

तच्चिन्त्यम् । एवं सत्यपि यो वह्निव्याप्यवान् स वह्निमानिति महाव्याप्ति-

प्रत्यक्षेऽतिव्याप्तेः । तत्रापि व्याप्यतावच्छेदकव्याप्यत्वप्रकारकज्ञानस्य सहचारज्ञानत्वेन हेतुत्वात् । पक्षताद्युपरागसत्त्वाच्च । किञ्च, यत्रालोकेन वह्न्यनुमितीच्छा धूमे च व्याप्यत्वपरामर्शः, तत्रापि साध्यसिद्धीच्छाघटितपक्षतासत्त्वेऽपि लिङ्गान्तरसिषाधयिषाप्रतिबन्धेनानुमित्यनुत्पन्न† परामर्शानुव्यवसायातिव्याप्तिः । अपिचेदं वह्निज्ञानं प्रमा वह्निव्याप्यवति तज्ज्ञानत्वादित्यत्र यः परामर्शस्तत्रातिव्याप्तिः । न चेह लिङ्गज्ञानतया परामर्शस्य जनकत्वेऽपि वह्निज्ञानसत्त्वान्न पक्षतोपराग इति वाच्यम् । तज्ज्ञानस्याप्रामाण्यशङ्काकलङ्कितयासत्कल्पत्वात् । अन्यथा प्रामाण्यानुमितिवैयर्थ्यापातात्, तद्घटकार्थनिश्चयादिति पक्षधरमिश्राः ।

अत्रेदं शङ्क्यते—भिन्ने विषये प्रत्यक्षापेक्षया अनुमितिसामग्रीबलवत्त्वेन महाव्याप्तिप्रत्यक्षपूर्वमनुमित्युत्पादेन पक्षताविरहान्न तत्रातिव्याप्तिः । प्रत्यक्षमानाभावस्यापि पक्षताघटकत्वेन तत्सत्त्वेनापि तत्र पक्षताविरहादतिव्याप्त्यभावः । किञ्चेत्यपि न । तल्लिङ्गकतत्साध्यकसिद्धीच्छात्वेन पक्षताघटकत्वात् तस्य च तत्राभावात्, तल्लिङ्गकत्वपर्यन्तस्य पक्षत्वाघटकत्वेऽपि तावद्दूरपर्यन्तस्य लक्षणप्रवेश इत्युपाध्यायाभिप्रेतत्वात् । अपिचेत्यपि न । अप्रामाण्यशङ्काशून्यत्वपर्यन्तस्य गुरुत्वेन लाघवात् सिद्ध्यभावमात्रस्य पक्षतात्वात् तस्य च तत्राभावादतिव्याप्त्यभावादिति ।

अत्रेदं स्फुरति—यत्र महाव्याप्तिप्रत्यक्षम्, अनन्तरमनुमितिर्मेऽस्त्वितीच्छा, तत्र प्रथमं महाव्याप्तिप्रत्यक्षे बाधकाभावेन पक्षतासत्त्वेन चा(ति)व्याप्तेर्दुष्परिहरत्वात् । प्रत्यक्षमानाभावस्य पक्षताघटकत्वेऽपि समानविषयकप्रत्यक्षाभावस्यैव तद्घटकत्वात् तस्य तत्र सत्त्वात् । वस्तुतस्तु उपमित्सादिना यत्र प्रथममुपमितिः, तत्रोक्तविशेषणैरप्यतिव्याप्तेर्वारयितुमशक्यत्वात् तदर्थमपि विशेषणान्तरं देयमिति अनन्त(र?)विशेषणदानापेक्षया पक्षताज(नक?न्य)त्वमात्रमेव लघु लक्षणे प्रवेश्यतामिति मिश्राभिसन्धिः । अत एव बहुविशेषणप्रवेशोऽप्येवं न स्यादिति कण्ठरवेण तैरेवोक्तमिति दिक् ।

इदं पुनरवशिष्यते—व्याप्तिः साध्यसाधनाधिकरणभेदेन भिन्ना । तथा चैकसाध्यनिरूपितव्याप्तिप्रवेशेऽपरसाध्यकानुमित्यव्याप्तिः । सर्वव्याप्त्यननुगतं च न

---

† अनुत्पन्नानुमितिकेत्यर्थः स्यात् ।

किञ्चिदेकमस्ति, येन तथा लक्षणप्रवेशः स्यादिति ।

अत्रेदं तत्त्वं —यत्किञ्चित्साध्यनिरूपितव्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यवृत्त्यनुभवत्वाव्यापकजातिमत्त्वस्य लक्षणार्थत्वाद् हेतुत्वं चात्र तत्त्वेन विवक्षितमिति न काप्यतिव्याप्तिरिति । यद्वा तत्त्वेनापि जनकता न विवक्षिता । किन्तु येन परामर्शेनानुमितिमात्रमुत्पादितं, तत्परामर्शजन्यज्ञानवृत्त्यनुभवत्वाव्यापकजातिमत्त्वं लक्षणमिति न काप्यतिव्याप्तिः ।

गौडास्तु —परामर्शे चरमकारणत्वं लक्षणार्थः । चरमत्वं तु स्वोत्पत्त्युत्तरभाविप्रतिबन्धकाभावातिरिक्तानपेक्षत्वम् । न च प्रत्यक्षादौ परामर्शस्य तदस्ति । इन्द्रियसन्निकर्षादेस्तादृशस्यापेक्षणादिति न काप्यतिव्याप्तिरित्याहुः । तच्चिन्त्यम् । यत्रेन्द्रियसन्निकर्षानन्तरमुत्पन्नपरामर्शेन संशयोत्तरप्रत्यक्षजननं, तत्रातिव्याप्तेः । अनुभवत्वसाक्षाद्व्याप्यजात्या यज्जातीयज्ञानजनने कापि परामर्शो नाचरमं कारणमित्यर्थे तु गौरवम् । अनुभवत्वसाक्षाद्व्याप्यजात्या यज्जातीयज्ञानत्वावच्छिन्नं प्रति परामर्शः कारणमित्यस्यैव लघुत्वे(न?)नाविकलत्वात् । यत्तु संशयोत्तरप्रत्यक्षे विशेषदर्शनं हेतुरेव न, तस्यापरकोटिज्ञानप्रतिबन्धकमात्रत्वात् । कोटिप्रत्यक्षं तु सामान्यसामग्रीत एवेति न तत्रातिव्याप्तिरिति । तन्न । संशयोत्तरप्रत्यक्षे विशेषदर्शनस्याहेतुत्वे(न?) अपरकोटिज्ञानप्रतिबन्धकत्वस्यैवानुपपत्तेः । विरोधिज्ञानसामग्रीत्वस्यैव तत्प्रतिबन्धकत्वयुक्तिरवात् । संशयोत्तरप्रत्यक्षे गुणानुरोधेनावधारणादिव्यवस्थानुरोधेन च तद्धेतुत्वस्य सिद्धत्वात् । यथा चैतत् तथा प्रत्यक्षमणिसारे प्रतिपादितं, प्रतिपादयिष्यते चाग्र इति सङ्क्षेपः ॥

इत्यनुमितिलक्षणम् ।

---

## अथ व्याप्तिवादः ।

तत्र व्याप्यवृत्तिसमानाधिकरणव्यधिकरणान्यतरधर्मावच्छिन्नग्राह्यसम्बन्धारोप्यकसाध्याभा(वा)वच्छिन्नाधिकरणवृत्तितज्जातीययावदभावप्रतियोगित्वं व्याप्तिः । वृक्षः संयोगी द्रव्यत्वादित्यत्र पक्षे साध्याभाववति तज्जातीयहेत्वभावासत्त्वेऽपि नाव्याप्तिः । तत्र साध्याभावस्याव्याप्यवृत्तित्वात् । केवलान्वयिसाध्यकेऽपि ना-

व्याप्तिः, व्यधिकरणधर्मावच्छिन्नसाध्याभावस्य तत्रापि प्रसिद्धतया तद्वति तज्जातीयहेत्वभावसत्त्वात्। समवायसम्बन्धेन वह्नित्वावच्छिन्नवह्न्यभाववति धूमत्वावच्छिन्नधूमाभावासम्बन्धिनि च धूमावयवे व्यभिचारेऽपि न तत्राव्याप्तिः, तदभावस्य ग्राह्यसम्बन्धानारोप्यकत्वात्। संयोगस्य तत्र ग्राह्यसम्बन्धत्वात्। यावत्पदेन धूमवान् वह्नेरित्यत्रापि नातिव्याप्तिः। व्यधिकरणधर्मावच्छिन्नधूमाभाववति तादृशवह्न्यभावेऽपि धूमत्वावच्छिन्नधूमाभाववत्ययोगोलके वह्नित्वावच्छिन्नवह्न्यभावासत्त्वेन व्यभिचारात्।

यद्वा ग्राह्यसम्बन्धारोप्यकव्याप्यवृत्तियत्समानाधिकरणसाध्यतावच्छेदकभिन्नसाध्यतावच्छेदकान्यूनानतिरिक्तवृत्तिधर्मानवच्छिन्नयावत्साध्यतावच्छेदकाश्रयमात्रप्रतियोगिकाभावत्वावच्छिन्ने व्यधिकरणधर्मावच्छिन्नप्रतियोगिकत्वं तत्र व्याप्तिः। समवायसम्बन्धावच्छिन्नवह्न्यभावस्य धूमसमानाधिकरणस्य व्यधिकरणधर्मावच्छिन्नाप्रतियोगिकत्वेऽपि न तत्राव्याप्तिः। तस्य ग्राह्यसम्बन्धानारोप्यकत्वात्। व्याप्यवृत्तित्वविशेषणाच्च नाव्याप्यवृत्तिसाध्यकाव्याप्तिः। धूमसमानाधिकरणयावद्वह्निमात्रप्रतियोगिकव्यासज्यवृत्त्यभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकान्यूनानतिरिक्तवृत्तिधर्मानवच्छिन्नत्वं विशेषणम्। तस्य च साध्यतावच्छेदकान्यूनानातीरिक्तवृत्तिबहुत्वाद्यवच्छिन्नत्वात्। एवमपि व्यभिचारिणि धूमत्वावच्छिन्नधूमाभावस्य साध्यतावच्छेदकधूमत्वान्यूनानतिरिक्तवृत्तिधूमत्वावच्छिन्नतया तत्तद्धूमाभावस्य च यावत्साध्यतावच्छेदकधूमत्वाश्रयप्रतियोगिकत्वाभावेन व्यधिकरणधर्मावच्छिन्नधूमाभावस्यैवोक्तसकलविशेषणावच्छिन्नतया तत्र च व्यधिकरणधर्मावच्छिन्नप्रतियोगिकत्वसत्त्वादतिव्याप्तिः स्यादिति साध्यतावच्छेदकभिन्नत्वं साध्यतावच्छेदकान्यूनानतिरिक्तवृत्तिधर्मविशेषणम्। तथा च धूमत्वावच्छिन्नाभावस्यापि साध्यतावच्छेदकभिन्नसाध्यतावच्छेदकान्यूनानतिरिक्तवृत्तिधर्मानवच्छिन्नत्वसत्त्वेन विशेषणान्तरसत्त्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिकत्वस्य च तत्राभावेन न तत्रातिव्याप्तिः। पर्वतीयधूमसमानाधिकरणमहानसीयवह्न्यभावस्य न व्यधिकरणधर्मावच्छिन्नप्रतियोगिकत्वमित्यव्याप्तिभिया यावत्त्वं विशेषणम्। मात्रपदं च घटवह्न्युभयवृत्तिद्वित्वावच्छिन्नाभावमादायाव्याप्तिवारणाय। व्यभिचारिणि नैवम्। वह्निसमानाधिकरणधूमाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगित्वाभावात्। केवलान्वयिनि च नाव्याप्तिः। व्यधिकरणधर्मावच्छिन्नाभावस्य तत्रापि प्रसिद्धत्वादिति केचित्।

इदं तु लक्षणद्वयं व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावं दूषयन् मणिकृत् तात्पर्यतो दूषयाञ्चक्रे। तथाहि — घटनिर्विकल्पकाद् घटाभावाग्रहेण प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं फलीभूतज्ञानसमानप्रकारकप्रतियोगिज्ञानं वाभावज्ञानं प्रति कारणं वाच्यम्। न चैतद् व्यधिकरणधर्मावच्छिन्नाभावेऽस्ति। शशीयत्वावच्छिन्नतया शृङ्गस्याज्ञानात्। शृङ्गं शशीयं नेति प्रतीतौ सत्यामेवैतादृशाभावप्रतीतेः। तस्माच्छृङ्गे शशीयत्वाभावमात्रं विषय इति।

अत्र वदन्ति — आहार्यानाहार्यसाधारणप्रतियोगितावच्छेदकविशिष्टज्ञानमेवाभावज्ञानहेतुः। तथा च विशेषदर्शनेऽप्याहार्यप्रतियोगितावच्छेदकवैशिष्ट्यज्ञानादस्तु व्यधिकरणधर्मावच्छिन्नाभावधीः। विशेषादर्शने त्वनाहार्यभ्रम एव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूपः। न च तत्राभावबुद्ध्यसम्भवः, प्रतियोगितावच्छेदकविशिष्टप्रतियोगिन एवाधिकरणे ज्ञानादि(ति) वाच्यम्। गवि शृङ्गप्रत्ययदशायामेव शशीयत्वावच्छिन्नतया गृह्यमाणशृङ्गाभावधीसम्भवात्। न च शृङ्गत्वावच्छिन्नाभावो धीविषयो न तु व्यधिकरणधर्मावच्छिन्नाभाव इति वाच्यम्। सामग्रीसत्त्वे तद्विषयतायामपि बाधकाभावादिति।

अत्राहुः — ससम्बन्धिकपदार्थग्रहे सम्बन्धितावच्छेदकविशिष्टसम्बन्धिज्ञानमनाहार्यं हेतुः। कथमन्यथाहार्यघटज्ञानाद् न घटसंयोगप्रत्यक्षम्। अत एव शृङ्गे शशीयत्वग्रहकालेऽपि शशशृङ्गं नास्तीति प्रतीतिर्न विशिष्टाभावमवगाहते। शृङ्गे शशीयत्वग्रहकालीनप्रतीतेस्तदाकारायाः कारणबाधेन शृङ्गे शशीयत्वाभावमात्रविषयत्वकल्पनात्। तस्यास्तद्विषयत्वेनैवोपपत्तेः। नहि समानाकारप्रतीतेः समयपुरुषादिभेदाद् विषयभेदं काप्याकलयाम इति न कापि व्यधिकरणधर्मावच्छिन्नाभावः प्रतीतिविषय इति।

अत्र शङ्क्यते — संयोगस्थले पृथक्कल्पनावश्यं वाच्यैव। अन्यथातीन्द्रियस्यापि संयोगः प्रत्यक्षः स्यात्। तथा च तत्रानाहार्यप्रतियोगिप्रत्यक्षत्वेन विशेषहेतुत्वेऽपि सामान्यसामग्र्यामनाहार्यत्वविशेषणप्रवेशो गौरवपराहतो ग्रस्तश्च व्यभिचारेण। आहार्यज्ञानानुव्यवसाये आहार्यज्ञानस्यैव सम्बन्धिज्ञानात्मकस्य हेतुत्वात्। न च तत्राप्याहार्यधीजनकमनाहार्यविशेषणज्ञानमेव हेतुरिति वाच्यम्। विनश्यदवस्थविशेषणधीजन्यस्याहार्यज्ञानस्यानुव्यवसाये तथापि व्यभिचारात्। आहार्यज्ञानसम्बन्धिविशिष्टगोचरत्वाभावेन पूर्वविशेषणज्ञानस्य सम्बन्धिज्ञानत्वाभा-

वाच्च। यच्चोक्तं समानाकारप्रत्ययस्य समानविषयत्वनियम इति। तदप्यसत्। विभक्ताविति प्रत्ययस्य विभागसत्त्वकाले तद्विषयकत्वात्। तन्नाशकाले च संयोगनाशविषयकत्वात्। संयोगवन्नेति प्रतीतेर्द्रव्यगुणाद्यधिकरणभेदेन भिन्नविषयकत्वाच्च। यदपि योग्यानुपलब्ध्यभावान्न व्यधिकरणधर्मावच्छिन्नाभावधीः। तथाहि— प्रतियोगितद्व्याप्येतरयावत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्युपलम्भ[1]कसमवधाने सत्युपलब्ध्यभावोऽभावधीहेतुः। इह तु प्रतियोगितावच्छेदकविशिष्टप्रतियोग्युपलम्भस्य भ्रमतया दोषोऽप्युपलम्भको वाच्यः। तथा च तत्सत्त्वेऽनुपलब्धिरेव न, तदसत्त्वे च योग्यतैव नेति कथमभावधीः। न च प्रतियोग्युपलम्भकसमवधानमात्रं योग्यता, न तु प्रतियोगितावच्छेदकावच्छिन्नोपलम्भकपर्यन्तमिति वाच्यम्। तथा सति गुरुत्वावच्छिन्नघटाभावप्रत्यक्षतापत्तेः। तदुक्तमाचार्यचरणैः—

"दृष्टोपलम्भसामग्री शशशृङ्गादियोग्यता।
न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने॥"

इति। तस्माद् व्यधिकरणधर्मावच्छिन्नाभावस्थले विशेषणाभावमात्रं विषय इत्येव (जायत ? ज्याय) इति। तदप्यसत्। प्रतियोगितद्व्याप्येतरेत्यस्य साधारणप्रतियोग्युपलम्भकेत्यर्थो वाच्यः। अन्यथा संयोगादिनाशजन्यसंयोगाभावप्रत्यक्षाव्याप्तेः। तथा च दोषस्याप्यसाधारण्येन तत्समवधानस्य योग्यतायामप्रवेशेनोक्तदोषाभावात्, मणिकृन्मते प्रतियोगिसत्त्व(प्रसञ्जन)प्रसञ्जितप्रतियोगिकानुपलब्धेरादराच्च। न च शशीयत्वावच्छिन्नशृङ्गाप्रसिद्ध्या यदि शशीयत्वावच्छिन्नशृङ्गं गवि स्यादित्याकारमापादकं कथमिति वाच्यम्। शशीयत्वं शृङ्गे आरोप्य तद्विशिष्टशृङ्गस्य गव्यापादनसम्भवात्।

केचित्तु नेहानुपलब्धिरस्ति। अनाहार्यप्रतियोगितावच्छेदकप्रतियोगिसंसर्गज्ञानाभावरूपत्वात् तस्याः। शृङ्गं शशीयं नेति विशेषदर्शनवतः तादृशज्ञानरूपप्रतियोग्यप्रसिद्ध्या कथं तदभावः। न च परकीयज्ञानमादाय प्रसिद्धस्य प्रतियोगिनः तदात्मन्यभावः कारणमिति वाच्यम्। तथा सति पराज्ञातव्यक्तिद्वये परस्परव्यावृत्तधर्मावच्छिन्नपरस्पराभावप्रत्ययो न स्यादिति तत्र विशेषणाभावमात्रं प्रतीतिविषय इत्यन्यत्रापि तथा समानाकारप्रतीतेः समानविषयकत्वादिति। तदपि

---

१. 'म्भस' क. पाठः.

चिन्त्यम् । तत्कालीनतत्पुरुषीयप्रतियोग्याधिकरणगोचरतदिन्द्रियजन्यसंसृष्टबुद्धावनाहार्यत्वाभावस्यैवानुपलम्भत्वात् । तस्य च प्रकृतेऽपि सम्भवात् । यथा चैतत् तथा प्रत्यक्षमणिसारे व्यक्तमुक्तम् । किं बहुना, पराज्ञातव्यक्तिद्वयस्थले उक्तानुपलम्भरूपहेतुबाधेन तादृशप्रतीतेर्विशेषणाभावविषयकत्वकल्पनेऽप्यन्यत्र विशिष्टाभावविषयकत्वे बाधकाभावः । अन्यथा प्रत्यभिज्ञानस्य शब्दादौ तज्जातीयविषयकत्वकल्पनाद् घटादावपि तथा स्यादिति जितं क्षणिकतावादिनेति ।

यदपि च प्रतियोगितावच्छेदकप्रकारकं[1]प्रतियोग्युपलब्ध्यभावो नाभावधीहेतुः । कम्बुग्रीवादिमति घटत्वं नेति धीकालेपि अत्र घट इति ज्ञाना(न)न्तरं कम्बुग्रीवादिमान्नास्तीति प्रतीत्यनापत्तेः । गौरवेण कम्बुग्रीवादिमत्त्वस्य[2] घटाभावप्रतियोगितानवच्छेदकत्वात् । प्रतियोगितावच्छेदकघटत्वावच्छिन्नस्य चोपलम्भात् । तस्मात् प्रतियोगिमात्रवृत्तित्वेन गृह्यमाणधर्मप्रकारकप्रतियोगिज्ञानाभावः कारणं वाच्यः । न च व्यधिकरणधर्मावच्छिन्नाभावे तदस्ति । शृङ्गमात्रवृत्तित्वेन गृह्यमाणशृङ्गत्वावच्छिन्नस्यैवोपलम्भादिति । तदपि न । एवं सति घटत्वं घटभिन्नेऽप्यस्तीति भ्रमदशायामत्र घट इति ज्ञानेऽपि घटो नेहेति प्रतीत्यापत्तेः । प्रतियोगिमात्रवृत्तित्वेन घटत्वस्याज्ञानात् । तस्मात् फलीभूताभावप्रतीतौ प्रतियोग्यंशे यावान् प्रकारः, तन्मध्ये तस्याधिकाधिकरणत्वेनागृहीतो[3] यत्किञ्चित्तद्धीप्रकारः, तत्प्रकारकप्रतियोगिज्ञानाभावोऽभावधीहेतुः । अत एव घटोऽस्तीति ज्ञानानन्तरं प्रमेयघटो नास्तीति न प्रतीतिः । अभावप्रतीतिप्रकारयोः प्रमेयत्वघटत्वयोरधिकाधिकरणत्वेनागृहीतघटत्वप्रकारकज्ञानसत्त्वात् । अत एव च घटोऽस्तीति ज्ञानानन्तरं नीलघटो नेहेति मतिः । घटत्वप्रकारकप्रतियोगिज्ञानेऽपि घटत्वस्य नीलत्वाधि[4]काधिकरणकत्वेन ग्रहात् । अस्ति चैतद् व्यधिकरणधर्मावच्छिन्नाभावेऽपि । अभावप्रतीतिप्रकार (क ?) शशीयत्वाधि[5]काधिकरणकत्वेन[6] गृहीतशृङ्गत्वविशिष्टशृङ्गग्रहेऽपि विशिष्टाभावसत्त्वादिति ।

यच्च कश्चिदवोचत्—शृङ्गे शशीयत्वाभावग्रहात् कथमभावप्रतीतेः प्रतियोगिनि तद्वैशिष्ट्यधीरिति । तदप्यसारम् । अभावप्रतीतावपि तद्वैशिष्ट्यज्ञानस्या-

---

१. 'कप्रकारकप्र' क. पाठः. २. 'दित्वस्य' ख. पाठः. ३. 'क' ख. पाठः. ४. 'त्वात्वाधिक' क. पाठः. ५. 'त्वाधिक' क. पाठः. ६. 'णत्वे' क. पाठः.

हार्यत्वात् । तत्र च बाधस्याविरोधित्वादिति न किञ्चिदेतत् ।

यत्तु — एवं सति घटत्वावच्छिन्ने पटे द्रव्यत्वं नेति प्रतीत्या व्यधिकरण-धर्मावच्छिन्नाधिकरणताकोऽप्यभावः सिध्येदिति यथा तत्राधिकरणे विशेषणाभाव-मात्रं विषयः तथेह प्रतियोगिन्यपि । अन्यथानन्ताभावकल्पनापत्तेरिति । तदपि न । अधिकरणतावच्छेदकभेदादभावभेदस्य प्रतियोगितावच्छेदकभेदादिवानभ्युपग-मेन प्रतिबन्धभावात् । भवतु वा प्रतीतिबलात् सोऽपि, किं नश्छिन्नम्, अनुभवेन वस्तुव्यवस्थायां गौरवस्याकिञ्चित्करत्वात् । अन्यथा बहु व्याकुलीस्या-दित्यलं बहुना ।

यच्च मान्यैरुक्तं — जनकीभूतारोपविषयस्यैव प्रतीतिविषयाभावप्रतियो-गित्वमिति नियमः । न चेह शृङ्गस्यारोपः, तस्य गवि सत्त्वात् । न च विशिष्टस्या-रोपोऽसत्त्वादिति वाच्यम् । विशिष्टस्यानतिरेकेण विशेषणमात्रस्यैवारोप इति त-स्यैवाभावो धीविषय इति । तदपि न भव्यमिव । शुद्धविशेषणविशेष्ययोर्विशिष्टव्य-वहाराभावेन विशेषणावच्छिन्नविशेष्यस्य विशिष्टतया वाच्यत्वात् । तस्य च विशे-ष्यमात्रसत्त्वेऽप्यसत्त्वादारोपसम्भवात् । न च विशेषणावच्छिन्नविशेष्यस्य प्रकृ-तेऽत्यन्तासत्त्वान्नारोप इति वाच्यम् । विशेष्ये विशे(ष्यां[1]षणा)रोपेण विशि-ष्टप्रसिद्धौ तदनन्तरं तस्याप्यारोपे बाधकाभावात् । किञ्च, आरोपपदेनाहार्यज्ञानमेव वाच्यम् । अन्यथा घटाभावभ्रमे विद्यमानतया घटस्यानारोपेण भासमानाभाव-प्रतियोगित्वं न स्यात् । न स्याच्चाभावबुद्धेर्भ्रमत्वम् । तथा चाहार्यज्ञानं शृङ्गस-त्त्वेऽप्यविरुद्धमेवेति व्यधिकरणधर्मावच्छिन्नाभावे बाधकाभाव इति ।

अत्राहुः — प्रतियोगित्वं स्वरूपसम्बन्धः । स च जनकत्वगर्भः । न चा-सतः शशीयत्वावच्छिन्नशृङ्गस्य जनकता । पूर्ववर्तित्वाभावादिति न व्यधिक-रणधर्मावच्छिन्ने प्रतियोगितासम्भव इति न तादृशाभावसिद्धिरिति ।

अत्र शङ्क्यते । प्रतियोगित्वं शृङ्गे न तु विशिष्टे । येनोक्तदोषाशङ्का स्यात् । तन्निष्ठायां च प्रतियोगितायां शशीयत्वमवच्छेदकमात्रं प्रतीतिबलादास्थी-यत इति ।

अत्रायमभिसन्धिः — कारणतावच्छेदकरूपेण कारणस्य पूर्वसत्ता मृग्यते ।

---

१. 'ष्या' क. पाठः.

अन्यथातिप्रसङ्गात् । तच्चात्र न सम्भवति विशिष्टस्यासत्त्वात् । यद्वा लाघवेन प्रतियोगिताश्रयेण सहाभावस्य विरोध इति न शृङ्गमात्रवृत्तिः प्रतियोगिता । तथा सत्यभावासत्त्वप्रसङ्गात् । प्रतियोगिनस्तस्य सत्त्वात् । तस्मादवच्छेदकावच्छिन्ननिष्ठा प्रतियोगिता वाच्या । तच्च प्रकृते न सदिति किं प्रतियोगिता समाश्रयेदिति ।

वस्तुतस्तु भावाभावयोर्विरोधस्य प्रमाणसिद्धतया यथासम्भवं विरोधः कल्प्यत इति कथमेकत्र शृङ्गतदभावयोः सम्भवः । नास्तीति प्रतीतेश्च विशेषणाभावविषयत्वेनाप्युपपत्तेः । यत्र चोपपत्तिर्नास्ति तत्रागत्या सामानाधिकरण्यं तयोः स्वीक्रियत एव संयोगतदभावयोरिव । तदनुरोधाच्चावच्छेदकैक्यमपि तत्र विरोधे तन्त्रमभ्युपेयते । अत एव तद्वति सम्बन्धान्तरेण तदभाव इत्यपि नास्ति । तत्रापि सम्बन्धाभावमात्रविषयतयैव प्रतीतेरुपपत्तेर्विरोधस्यात्यागात् । अत एव व्यासज्यवृत्तिप्रतियोगिकाभावोऽपि न । तद्वति साहित्याभावेनैवोपपत्तेरिति वदन्ति ।

इदं त्ववशिष्यते — एवमपि व्यधिकरणधर्मावच्छिन्नान्योन्याभावे बाधकाभावः । प्रतियोगितावच्छेदकेन सह तस्य विरोधात् । तस्य च प्रकृतेऽप्यविकलत्वादिति ।

अत्र प्रतिभाति — तत्रापि प्रतियोगितावच्छेदकेन सह न विरोधः । किन्तु प्रतियोगिनैव, लाघवात् । सर्वत्रारोप्येण सह विरोधाङ्गीकारात् । आरोप्यता च क्वचित् तादात्म्यावच्छिन्नस्य, क्वचित् संसर्गावच्छिन्नस्य प्रतियोगिन इत्यन्यदेतत् । न च शशीयत्वं शृङ्गतादात्म्यम् । तस्य स्वासाधारणधर्मत्वाभावात् । किं बहुना, तदसाधारणो धर्मस्तत्प्रतियोगिकान्योन्याभावमात्रे विरोधी । स च धर्म इह शृङ्गत्वमिति केनापि रूपेण तद्वति न शृङ्गान्योन्याभावः । अत एव वृक्षे न संयोगवदन्योन्याभावः । असाधारणधर्मस्य तद्वृक्षत्वस्य प्रतिबन्धकत्वात् । कालादौ च जगदाधारताहानिभिया कालत्वेन स्वान्योन्याभावाधारत्वं, न तु देशतया । तथात्वे कालः कालो नेति प्रत्ययापत्तेरिति । अत्र च भूतले शशशृङ्गं नास्तीति प्रतीतेर्व्यधिकरणधर्मावच्छिन्नाभावविषयकत्वे बाधकाभावः । शृङ्गस्य प्रतियोगिनस्तत्रासत्त्वादिति (देख्वमानामेयं)§ नवि तादृशप्रतीतेर्विशेषणाभावविषयत्वेऽन्यत्रापि तथात्वात् समानप्रकारकप्रतीतेर्बाधकं विना समानविषयकत्वनियमादिति ।

---

१. 'दर्व्योव' क. पाठः. २. 'दर्व्यम् ।' क. पाठः.

---

§ 'देश्यमनादेयम्' इति पाठो भाति ।

अस्मत्पितृचरणास्तु — अवच्छेदकत्वं स्वरूपसम्बन्धो वान्यद् वा सर्वथावच्छेद्यानतिरिक्तवृत्तेरेव । अन्यथा द्रव्यत्वस्य दण्डजन्यतावच्छेदकत्वं मेयत्वस्य घटजनकतावच्छेदकत्वं च स्यादिति भूयानतिप्रसङ्ग आपद्येत । तथा च शशीयत्वं कथं शृङ्गाभावप्रतियोगितावच्छेदकं, तदवृत्तित्वात् । अत एव मणिकृताप्युक्तं 'प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक' इति । न च व्यधिकरणधर्मावच्छिन्नविषयताप्रतियोगिज्ञानत्वस्य भ्रमलक्षणत्वेनाभिधानादिदमसङ्गतमिति वाच्यम् । तत्रावच्छिन्नेत्यस्य प्रकारकेत्यर्थात् । वस्तुतोऽतिरिक्तविषयता नास्त्येव । अनतिरिक्तायां तु समानाधिकरणेदन्त्वाद्यवच्छेदकं, न तु व्यधिकरणो धर्मः । न च प्रमुष्ट(त्वा:त्ता)कभ्रान्तस्मृतौ समानाधिरणधर्मस्याप्रकारत्वात् किमवच्छेदकमिति वाच्यम् । तत्राप्रकारीभूतस्याप्यनतिप्रसक्तधर्मस्यावच्छेदकत्वादित्याहुः ।

तस्माद् व्यधिकरणधर्मावच्छिन्नाभावघटितं व्याप्तेरसम्भवीति लक्षणान्तरं मणिकृत ऊचुः । तथाहि — "प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति, तेन सह तस्य सामानाधिकरण्यं तदवच्छिन्नस्य सर्वस्यापि व्याप्तिरि"ति ।

अत्र वदन्ति — तत्तद्धूमसमानाधिकरणविशेषाभावप्रतियोगितावच्छेदकतत्तद्वह्नित्वावच्छिन्नत्वाद् वह्नीनां प्रसिद्धानुमानाव्याप्तिः । न च यन्न भवतीत्यस्य यदवच्छिन्नं न भवतीत्यर्थः, तथा च वह्नित्वावच्छिन्नं प्रति तत्तद्वह्नित्वं नावच्छेदकमिति नाव्याप्तिरिति वाच्यम् । तत्तद्वह्नित्वस्य वह्नित्वावच्छिन्नानतिप्रसक्तत्वेन तदवच्छिन्नं प्रत्यप्यवच्छेदकत्वादिति ।

अत्र पक्षधरमिश्राः — नञ्व्यत्यासेन प्रतियोगितानवच्छेदकावच्छिन्नत्वमर्थः । तथा च तत्तद्वह्नित्वस्य प्रतियोगितावच्छेदकत्वेऽपि साध्यतावच्छेदकवह्नित्वस्य प्रतियोगितानवच्छेदकत्वाद् नाव्याप्तिशङ्केत्याहुः ।

अत्र शङ्क्यते — एवं सति व्यभिचारिण्यतिव्याप्तिः । धूमत्वस्यापि तादृशात्यन्ताभावप्रतियोगितानवच्छेदकत्वात् । प्रतियोगितायाः तत्तत्स्वरूपरूपायाः धूमत्वानवच्छेद्यत्वात् । अतिरिक्तवृत्तेरनवच्छेदकत्वात् । न च तादृशात्यन्ताभावप्रतियोगितात्वावच्छिन्नप्रतियोग्यनवच्छेदकत्वं विवक्षितम् । तच्च धूमत्वे नास्त्येव । तादृशात्यन्ताभावप्रतियोगिसकलधूमवृत्तितया धूमत्वस्य तादृशावच्छेदकत्वसत्त्वा-

---

१. 'गित्वा' क. पाठः.

दिति वाच्यम् । एवं सत्यव्याप्तेर्दुष्परिहारत्वात् । धूमवन्निष्ठयावद्वह्निविशेषाभावप्रतियोगिसर्ववह्निवृत्तितया वह्नित्वस्यापि प्रतियोगितात्वावच्छिन्नप्रतियोग्यवच्छेदकत्वादिति ।

अत्र नव्याः — एकत्वमभावविशेषणम् । तथा च हेतुसमानाधिकरणैकाभावप्रतियोगितानवच्छेदकत्वमर्थः । तच्च धूमत्वस्य नास्ति । वह्निसमानाधिकरणधूमसामान्याभावप्रतियोगितावच्छेदकत्वात् । वह्नित्वे च नैवम् । धूमवति वह्निसामान्याभावाभावेन तथाभूतैकाभावप्रतियोगितानवच्छेदकत्वात् तस्य । अत एव सामान्याभावमाभावनमपि मणिकृतो युज्यत इति नाव्याप्तिर्नातिव्याप्तिरिति वदन्ति ।

अत्रेदं चिन्त्यम् — अयमन्धकाराभाववानेतत्त्वादिति व्यभिचारिण्यतिव्याप्तिः । अन्धकारस्य यावदुद्भूतरूपवत्तेजस्संसर्गाभावस्यैकत्वाभावेन हेतुसमानाधिकरणैकाभावप्रतियोगितानवच्छेदकत्वाद् अन्धकाराभावत्वस्य । न चोद्भूतरूपतेजस्त्वावच्छिन्नसामान्याभाव एक एवान्धकार इति न तत्रातिव्याप्तिरिति वाच्यम् । कस्यचित् तेजसः प्रागभावस्य कस्यचिद् ध्वंसस्य सत्त्वेनात्यन्ताभावासत्त्वात् । अत्यन्ताभावस्य प्रतियोगिनेव प्रागभावादिनापि विरोधात् । ननु विरोधः फलबलकल्प्यः । स च घटज्ञाने तदधिकरणे तदत्यन्ताभावाग्रहात् तेन सहास्तु । न तु प्रागभावादिनापि, मानाभावात् । प्रत्युत ध्वंसप्रागभावकाले इदानीं कपालेषु घटो नास्तीति प्रतीत्या अविरोध एवेति चेद्, एवं सत्यपसिद्धान्तापातात् । अस्तु वान्धकारः सामान्याभावः । तथापि यत्र तावद् विशेषाभावः साध्यः, तत्रैव व्यभिचारिण्यतिव्याप्तिर्दुर्वारा । किं बहुना, यदा घटत्वं तदा घट इति कालिकव्याप्त्यातिव्याप्तं लक्षणम् । घटत्वसमानकालीनैकध्वंसप्रतियोगितानवच्छेदकत्वाद् घटत्वस्य । ध्वंसस्य सामान्याभा(वा? वत्त्वा)भावेन एकविशेषाभावस्यैव प्राप्तेः, तत्प्रतियोगितायाश्चैकघटमात्रवृत्तित्वेनातिरिक्तवृत्तिघटत्वानवच्छेद्यत्वादिति । तस्मादिदमत्राकूतम् — एकत्वं हेत्वधिकरणविशेषणम् । तेनैकहेत्वधिकरणनिष्ठयावदभावप्रतियोगितात्वावच्छिन्नानवच्छेदकत्वमर्थः पर्यवस्यति । स च सद्धेतावस्त्येव । एकधूमाधिकरणमहानसवृत्त्यत्यन्ताभावसमूहप्रतियोगितानाश्रयमहानसीयवह्निवृत्तित्वेन वह्नित्वस्य तथाभूताभावप्रतियोगितानवच्छे-

१. 'गित्वा' क. पाठः. २. 'त्वः । व' क. पाठः.

दकत्वात् । अतिरिक्तवृत्तेरनवच्छेदकत्वात् । व्यभिचारिणि च नैवम् । एकव-ह्न्यधिकरणायोगोलकवृत्त्यत्यन्ताभावानां यावद्धूमप्रतियोगिकानां याः प्रतियोगिताः, तासां धूमत्वावच्छेद्यत्वात् । तादृशप्रतियोगितात्वावच्छिन्नानातिरिक्तवृत्तित्वाद् धूमत्वस्य । एवं कालिकव्याप्तावपि नातिव्याप्तिशङ्केति । नन्वेकाधिकरणकत्वमव्यावर्तकं, सर्वेषां प्रत्येकमेकत्वादिति चेद्, न । यदधिकरणनिष्ठाभावप्रतियोगिवृत्तित्वं, तदधिकरणनिष्ठाभावाप्रतियोगिवृत्तिभिन्नत्वस्योक्तप्रतियोगितावच्छेदकत्वस्यात्र विवक्षितत्वादिति न किञ्चिदनुपपन्नम् ।

यत् त्वेकत्वं हेतुविशेषणमेवेति नोक्ताव्याप्तिरिति, तन्न । इयं गन्धवती पृथिवीत्वादित्यादौ विशेषाभावमादायाव्याप्तेस्तथाप्यनुद्धाराद्, हेतोरेकत्वादिति न किञ्चिदेतत् । अत्र चायमेतत्कपिसंयोगी एतत्त्वादित्यादावव्याप्तिः । एतत्त्वरूपहेतुसमानाधिकरणैतत्कपिसंयोगाभावप्रतियोगितावच्छेदकत्वादेतत्संयोगत्वस्येत्यत उक्तं प्रतियोग्यसमानाधिकरणेति । तथा च तदभावस्य प्रतियोगिसमानाधिकरणत्वात् प्रतियोग्यसमानाधिकरणघटाद्यभावप्रतियोगितानवच्छेदकत्वं तत्रास्त्येवेति नाव्याप्तिः ।

केचित्तु — यावद्विशेषाभावव्यापकत्वात् सामान्याभावस्य तद्वति संयोगसामान्याभावोऽप्यस्तीति तमादाय वृक्षः संयोगी द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत्पदमिति वदन्ति । तच्चिन्त्यम् । वृक्षे संयोगसामान्याभावसत्त्वे वृक्षे संयोगो नेति धीः स्यात्, न त्वग्रे वृक्षे संयोगो नेति । न चैकावच्छिन्नयावद्विशेषाभावः सामान्याभावव्यञ्जक इति सन्नपि संयोगसामान्याभावस्तत्रैकावच्छिन्नयावद्विशेषाभावाभावान्न प्रतीयत इति वाच्यम् । एकावच्छिन्नयावद्विशेषाभावस्य तत्सत्तायामेव नियामकत्वात् । अन्यथा यत्किञ्चिद्विशेषाभाव एव सामान्याभावव्याप्योऽस्तु, एकावच्छिन्नयावद्विशेषाभावरूपव्यञ्जकविरहान्न तस्योपलब्धिरिति तत्केवलान्वयित्वमेव किं न ब्रूयाः । ननु वृक्षे संयोगसामान्याभावोऽङ्गीकार्य एव । वृक्षत्वावच्छेदेन संयोगस्य कस्याप्यभावेन वृक्षत्वस्य संयोगाभाववृत्त्यवच्छेदकत्वात् । यो यद्वृत्त्यवच्छेदको न भवति, स तदभाववृत्त्यवच्छेदक इति व्याप्तेः । अन्यथा द्रव्यभिन्नत्वस्य गुणवृत्त्यनवच्छेदकस्यापि गुणाभाववृत्त्यनवच्छेदकत्वापातादिति चेद्, न । त्वदुक्तव्याप्तेः प्रमेयत्वादौ व्यभिचारात् । तस्य द्रव्यत्ववृत्त्यनवच्छेदकस्य द्रव्यत्वाभाववृत्त्यनवच्छेदकत्वात् । किञ्च, वृक्षत्वं

संयोगवृत्त्यवच्छेदकमेवास्तु । न च संयोगाभावसमानाधिकरणत्वात् कथं संयोगवृत्त्यवच्छेदकं तद्, अतिप्रसक्तत्वादिति वाच्यम् । हन्तैवं संयोगसमानाधिकरणत्वात् कथं संयोगाभावावच्छेदकमित्यपि दीयतां दृष्टिः । किं बहुना, वृक्षत्वावच्छेदेनाकाशादिसंयोगसत्त्वात् कथं तदवच्छेदेन संयोगसामान्याभावः । यावद्विशेषाभावमन्तरेण सामान्याभावसत्त्वस्य केनाप्य(न)ङ्गीकारात् । न च संयोगत्वेनैवाव्याप्यवृत्तित्वात् कथमाकाशादिसंयोगोऽपि वृक्षं व्याप्य वर्ततामिति वाच्यम् । अव्याप्यवृत्तित्वस्य स्वाभावसमानाधिकरणत्वरूपस्यान्यथानुपपत्त्यैव कल्पनात् । तस्याश्च मूले हरिसंयोगो न शाखायामित्यादिप्रतीत्या द्रव्यसंयोग एव भावेन तत्राव्याप्यवृत्तिताकल्पनात् । न चान्यथानुपपत्त्या क्वचिदव्याप्यवृत्तितायां कल्प्यमानायां संयोगत्वेनैव तत्कल्पना लाघवात् प्रसरतीति वाच्यम् । एतादृशकल्पनायां लाघवस्याकिञ्चित्करत्वात् । अन्यथा संयोगत्वापेक्षयापि गुणत्वसत्त्वादिकं सामान्यत्वादव्याप्यवृत्तितावच्छेदकमस्त्वित्येव किं न रोचयेः । यदि च वृत्तिमत औत्सर्गिकं व्याप्यवृत्तित्वमापवादिकमव्याप्यवृत्तित्वमिति न गुणत्वं तत्रावच्छेदकमभ्युपैषि, तदा संयोगत्वेऽपि द्रव्यान्तरतादृशोऽस्तु । अस्तु वा संयोगत्वेनाव्याप्यवृत्तितानियमः, तुष्यतु दुर्जन इति न्यायात् । तथापि नानुपपत्तिः । स्वाधिकरणनिष्ठाभावप्रतियोगित्वमव्या(प्य)वृत्तित्वम् । तच्चाकाशवृक्षसंयोगस्य घटाद्यवच्छिन्नाकाशनिष्ठाभावप्रतियोगित्वेनैवोपपन्नं, लाघवेन स्वाधिकरणनिष्ठाभावप्रतियोगित्वस्यैवाव्याप्यवृत्तित्वपदा(र्था ? र्थत्वा)त् । यावदधिकरणगर्भत्वे गौरवादित्यास्तां विस्तरः । अत एव वृक्षे मास्तु संयोगसामान्याभावः, तथापि वृक्षः संयोगी द्रव्यत्वादित्यत्रैवाव्याप्तिवारकं प्रतियोग्यसमानाधिकरणपदम् । द्रव्ये यावद्विशेषाभावसत्त्वेन संयोगत्वस्य तत्प्रतियोगितात्वावच्छिन्नं प्रत्यवच्छेदकत्वादव्याप्तिसम्भवादित्यपि कस्यचित् प्रलपितमपास्तम् । वृक्षे यावत्संयोगाभावस्याभावात् । आकाशादिसंयोगस्य वृक्षत्वावच्छेदेनैव सत्त्वादित्युक्तत्वात् । तस्मादयमेतत्संयोगी एतत्त्वादित्यादावव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणपदमित्येव तत्त्वम् ।

नन्वत्र व्याप्तिरेव नास्ति, कथमव्याप्तिः, अलक्ष्यत्वात् । व्याप्तिसत्त्वे संयोगावच्छिन्नप्रदेश इव संयोगाभावावच्छिन्नप्रदेशेऽप्यनुमित्युदयापातात् । किञ्च, साध्याभावसामानाधिकरण्यसत्त्वाद्धेतुरयं व्यभिचार्येवेति चेद्, न । पक्षतावच्छेद-

कसमानाधिकरण(बा ? सा)ध्यस्यानुमितिविषयतया तदवच्छेदेन साध्यसिद्धावापादकासम्भवात् । किञ्च, पक्षधर्मताबलात् साध्यसिद्धिरनुमितौ, पक्षधर्मता च पक्षे हेतुसत्ता पक्षीयसाध्यं विनानुपपन्ना तमाक्षिपतीत्याकारा पक्षतावच्छेदकावच्छेदेन न साध्यं विषयीकरोति, किन्तु तदाश्रये । किञ्चेत्यपि न । प्रतियोगिविरुद्धसाध्याभावसहचारस्य व्यभिचारत्वादित्युपाध्यायाः ।

अत्र पक्षधरमिश्राः — पक्षतावच्छेदकसामानाधिकरण्येन हेतुज्ञाने पक्षतावच्छेदकसामानाधिकरण्येन साध्यभानम्, एवं पक्षतावच्छेदकावच्छिन्ने हेतुज्ञाने तु पक्षतावच्छेदकावच्छिन्न एव साध्यभानमित्यङ्गीकार्यमेव । अन्यथा क्वचित् पक्षतावच्छेदकसामानाधिकरण्येन क्वचित् पक्षतावच्छेदकावच्छेदेन साध्यानुमितिरिति स्याद्, नियामकाभावात् । तस्माद् येन रूपेण हेतुज्ञानं, तेन रूपेण साध्यं सिध्यतीति नियम इति संयोगाभावावच्छिन्नप्रदेशे संयोगानुमाने आपादकसत्त्वेऽपि बाधादेव तदवच्छेदेन न संयोगानुमानमिति तत्त्वम् । यच्च बाधानुपपत्त्या साध्यसिद्धिरित्युक्तं, तदपि न । स्वरूपसदनुपपत्तेर्भ्रमानुमित्यव्या(प्ति ? प्तेः,)ज्ञानानुपपत्तेश्चासम्भवात्, पक्षीयसाध्याभाने तद्विनानुपपत्तेर्ज्ञातुमशक्यत्वादित्याहुः ।

अत्र शङ्क्यते — यत्र यत्र हेतुधीस्तत्रतत्र साध्यं सिध्यतीत्येव नियमः, न तु येन रूपेणेत्यादि, मानाभावात् । पक्षतावच्छेदेन साध्यस्य क्वाप्यभानात् । अनुपपत्तिज्ञानं न सम्भवति पक्षीयसाध्याभानादिति यदुक्तम्, तदपि न । पक्षे हेतुः साध्यं विनानुपपन्न इति ज्ञानस्य पक्षीयसाध्यज्ञानं विनापि सम्भवात् । तस्मात् संयोगाभावप्रदेशे संयोगानुमितावापादकाभाव इत्युपाध्यायोक्तमेव सम्यग्, न तु तत्र बाधप्रतिबन्धवशादनुमित्यनुदय इति ।

अत्र प्रतिभाति — संयोगाभावप्रदेशे संयोगानुमितौ सामग्र्येवापादिका । न च पक्षतावच्छेदकसमानाधिकरणसाध्यज्ञानमात्रं सामग्रीत इत्युक्तमेवेति वाच्यम् । सत्यम् । परं तु तदेव सामानाधिकरण्यं संयोगाभावप्रदेशमादाय सिध्यतु, यदि तत्र बाधो न विरोधीति मिश्राशयात् । अनुपपत्तिज्ञानं च यद्यप्यु(त्क ? क्त-क्र)मेण सम्भवति, तथापि तस्य हेतुत्वे मानाभावः । व्याप्त्यादिज्ञानेनान्यथासि-

१. 'क' क. पाठः. २. 'न सा' क. पाठः.

द्वत्वादिति । वस्तुतस्तु पर्वते प्राग्भागाद्यवच्छेदेन धूमदर्शनानन्तरम् अप्राग्भागावच्छेदेन प्रवर्तेत, यदि पर्वतमात्रे वह्निभानम् । तस्माद् यदवच्छेदेन हेतुज्ञानं, तदवच्छेदेन साध्यं भासत इत्यवश्यमभ्युपेयम् । नन्विदमयुक्तम्, इदं द्रव्यं संयोगादित्यत्र व्यभिचारात् । तत्र संयोगस्य हेतोः शाखाद्यवच्छेदेन द्रव्यत्वस्य साध्यस्य च सर्वावच्छेदेन ग्रहादिति चेद्, न । बाधकाभावे सत्युक्तनियमाङ्गीकारात् ।

ननु प्रतियोग्यसमानाधिकरणपददाने शुद्धपुरुषाविनाभूतेन दण्डाविशिष्टपुरुषव्यभिचारिणा तद्गृहत्वादिना दण्डावच्छिन्नपुरुषस्य व्याप्त्यापत्तिः । तद्गृहत्वादिसमानाधिकरणदण्डावच्छिन्नपुरुषाभावस्य प्रतियोगिसमानाधिकरणतया विशिष्टाभावप्रतियोगितानवच्छेदकत्वस्य दण्डावच्छिन्नपुरुषत्वे सत्त्वादिति चेद्, न । प्रतियोग्यसामानाधिकर(ण्येन ? ण्यपदेन) प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यस्य विवक्षितत्वात् । भवति च पुरुषसमानाधिकरणत्वेऽपि दण्डावच्छिन्नपुरुषत्वरूपप्रतियोगितावच्छेदकावच्छिन्नासमानाधिकरण एव सोऽभाव इति नातिव्याप्तिः । नन्वेवमपि अयं भूतत्वमूर्तत्वोभयवान् मूर्तत्वादिति व्यभिचारिण्यतिव्याप्तिः । मूर्तत्वसमानाधिकरणस्य मनोनिष्ठभूतत्वमूर्तत्वोभयाभावस्य द्वित्वावच्छिन्नमूर्तत्वसमानाधिकरणतया प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यविरहादिति चेद्, न । प्रतियोगितावच्छेदकपर्याप्त्यधिकरणासामानाधिकरण्यस्य तदर्थत्वात् । अस्ति च मनसि द्वित्वावच्छिन्नभूतत्वमूर्तत्वाभावः प्रतियोगितावच्छेदकद्वित्वपर्याप्त्यधिकरणमिलितासमानाधिकरण इति न तत्रातिव्याप्तिः । ननु तथाप्यसम्भवः, काले सर्वेषामभावानां प्रतियोगिसमानधिकरणतया प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धेः । आकाशादेरवृत्तितापक्षे आकाशाद्यभावस्य प्रतियोगिव्यधिकरणस्य प्रसिद्धावपि व्यभिचारिण्यतिव्याप्तिः, प्रतियोग्यसमानाधिकरणवह्निसमानाधिकरणाकाशाद्यभावाप्रतियोगित्वात् साध्यधूमादेः । न च क्वचिदधिकरणे प्रतियोग्यसामानाधिकरण्यं विवक्षितम् । तच्च धूमाभावादेः कालेऽभावेऽपि अयःपिण्डादावस्त्येवेति नाप्रसिद्धिर्न वातिव्याप्तिरिति वाच्यम् । एवं सति संयोगाभावस्यापि गुणादौ प्रतियोग्यसामानाधिकरण्यात् संयोगसाध्यकाव्याप्तितादवस्थ्यात् । तस्माद्रे-

---

१. 'का' क. पाठः

त्वधिकरणत्वावच्छेदेन प्रतियोग्यसामानाधिकरण्यं वाच्यम् । तच्च धूमाभावादौ ना.स्त्येव । काले सामानाधिकरण्यात् । न च कालभिन्नाधिकरणे प्रतियोग्यसामानाधिकरण्यं विवक्षितमिति न तदादायाप्रसिद्धिरिति वाच्यम् । तथा सति कालो जगदाधारः कालत्वादित्यादिकालमात्राधिकरणनिष्ठव्याप्त्यव्याप्त्यापत्तेः । कालत्वरूपहेत्वधिकरणस्य कालभिन्नस्याप्रसिद्धचा कालभिन्नहेत्वधिकरणत्वावच्छेदेन प्रतियोग्यसामानाधिकरण्यस्य कुत्राप्यभावेनाप्रसिद्धिरिति ।

मैवम् । हेत्वधिकरणे क्वचिद् प्रतियोग्यसामानाधिकरण्यस्य विवक्षितत्वात् । तच्च धूमाभावादौ काले विरहेऽपि अयःपिण्डादिरूपाधिकरणेऽस्त्येवेति न कालमादायाप्रसिद्धिर्व्यभिचार्यतिव्याप्तिर्वा । अत एव न संयोगसाध्यकाव्याप्तिः । द्रव्यत्वाधिकरणे संयोगाभावस्य प्रतियोगिसामानाधिकरण्यनियमात् । अत एव वृक्षः संयोगी सत्त्वादित्यत्रापि नातिव्याप्तिः । सत्त्वाधिकरणीभूतगुणादौ संयोगाभावस्य प्रतियोग्यसामानाधिकरण्यात् ।

केचित्तु ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धेन प्रतियोग्यसामानाधिकरण्यमर्थ इति काले(पक्ष ? न प्रति)योग्यसामानाधिकरण्याप्रसिद्धिः । तत्र स्वरूपसम्बन्धेन सर्वेषां सत्त्वेऽपि ग्राह्यसामानाधिकरण्य(ग्रह ? प्रविष्ट)संयोगादिना सत्त्वाभावेनोक्तप्रतियोग्यसामानाधिकरण्यसत्त्वात् । अत एव धूमवति समवायावच्छिन्नवह्न्यभावसत्त्वेऽपि नाव्याप्तिः । तस्य ग्राह्यसामानाधिकरण्यप्रविष्टसंबन्धेन प्रतियोग्यधिकरणवृत्तितया विशिष्टाभाव(त्वा)सत्त्वादिति ।

तच्चिन्त्यम्—एवं सति कालो जगदाधारः कालत्वादित्यव्याप्त्यापत्तेः । तत्र ग्राह्यसामानाधिकरण्यप्रविष्टजगदाधारताप्रयोजकस्वरूपसम्बन्धेन प्रतियोग्यसमानाधिकरणकालत्वसमानाधिकरणाभावाप्रसिद्धेः । तेन सम्बन्धेन सर्वेषां कालवृत्तित्वादिति ।

पक्षधरमिश्राः—आरोप्यसम्बन्धेन प्रतियोग्यसामानाधिकरण्यं विवक्षितम् । तथा च न कालमादायाप्रसिद्धिः । तत्रारोप्यसमवायादिना प्रतियोग्यसामानाधिकरण्यसत्त्वात् । न चैवं समवायसम्बन्धावच्छिन्नवह्न्यभावमादाय सदनुमाना-

१. 'व सं' क. पाटः.

व्याप्तिः । आरोप्यसम्बन्धेन समवायावच्छिन्नवह्न्यभावस्यापि प्रतियोग्यसमानाधिकरणत्वादिति वाच्यम् । ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धावच्छिन्नत्वस्याभावे विशेषणत्वात् । समवायावच्छिन्नवह्न्यभावस्तु न तथा । संयोगस्य ग्राह्यसामानाधिकरण्यप्रविष्टत्वादित्याहुः ।

अत्र शङ्क्यते—कालो जगदाधारः कालत्वादित्यत्र हेतुसमानाधिकरणस्य ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धावच्छिन्नाभावस्याप्रसिद्ध्या लक्षणस्याव्याप्तिरिति । अत्रायमाशयः—आरोप्यसम्बन्धेन प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नत्वमर्थः । अस्ति च धूमसमानाधिकरणसमवायसम्बन्धावच्छिन्नवह्न्यभावप्रतियोगितानवच्छेदकत्वं संयोगसम्बन्धावच्छिन्नवह्नित्वस्येति नाव्याप्तिः । अत एव कालत्वहेतावपि नाव्याप्तिः । कालनिष्ठघटत्वाद्यभावस्य समवायसम्बन्धारोप्यकस्य स्वरूपसम्बन्धावच्छिन्नसाध्याप्रतियोगिकत्वादिति । ननु तथापि प्रसिद्धानुमानाव्याप्तिः । धूमसमानाधिकरणस्य धूमावयवनिष्ठस्य प्रतियोग्यसमानाधिकरणवह्न्यभावस्य या प्रतियोगिता तदवच्छेदकत्वाद् वह्नित्वस्येति चेद्, न । ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धेन हेत्वधिकरणस्य विवक्षितत्वात् । धूमावयवश्च न संयोगेन धूमाधिकरणमिति नाव्याप्तिः । नन्वेवमपि प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धिः । सर्वाभावस्य सर्वप्रतियोगिकत्वात् । तथाहि—घटाभावे पटो नास्तीति प्रतीतिः सर्वानुभवसिद्धा पटाभावविषयिणी च । तथा च तत्र पटाभावस्य भिन्नस्य विषयता न सम्भवति । अभावाधिकरणकाभावानङ्गीकारात् । किन्तु घटाभाव एव पटाभावरूपस्तत्र विषय इत्यङ्गीकार्यम् । तथा च सिद्धं घटाभावस्य पटाभावत्वम् । एवमन्याभावत्वमपीति धूमसमानाधिकरणस्य पटाद्यभावस्य प्रतियोगिधूमसमानाधिकरणत्वादसम्भव इति चेद्, न । घटाभावेऽप्यन्यत्र सिद्धस्य पटाभावस्य वृत्तौ बाधकाभावात् । अभावमात्राधिकरणाभावस्यैवास्माभिरनङ्गीकारात् । यदि च सिद्धान्तश्रद्धाजाड्यादभावाधिकरणकाभावानङ्गीकारः, तथापि नानुपपत्तिः । प्रतियोगिव्यवहारविषयासामानाधिकरण्यस्य घटाद्यभावस्य विवक्षितत्वात् । अस्ति च घटाद्यभावप्रतियोगिव्यवहारविषयता घटे, न तु पटे । व्यवहारस्यापर्यनुयोज्यत्वात् ।

ननु तथापि विकल्पासहविशेषणमिदम् । तथाहि—प्रतियोग्यसामाना-

धिकरण्यं यावत्प्रतियोग्यसामानाधिकरण्यं यत्किञ्चित्प्रतियोग्यसामानाधिकरण्यं वा विवक्षितम् । नाद्यः । अयं संयोगसामान्याभाववान् सत्त्वादित्यत्रातिव्याप्तेः । सत्त्वसमानाधिकरणस्य संयोगरूपाभावस्य विशेषाभावरूपप्रतियोगिसमानाधिकरणतया यावत्प्रतियोग्यसामानाधिकरण्याभावात् । प्रतियोग्यसमानाधिकरणघटाभावादिप्रतियोगितानवच्छेदकत्वात् साध्यतावच्छेद(क)स्य । नापरः । अयं संयोगविशेषाभाववान् वृक्षत्वादित्यादावव्याप्तेः । वृक्षत्वसमानाधिकरणसंयोगरूपस्य साध्याभावस्य सामान्याभावरूपप्रतियोग्यसमानाधिकरणतया संयोगविशेषाभावत्वस्य साध्यतावच्छेदकस्य तत्प्रतियोगितावच्छेदकत्वादिति ।

मैवम् । यत्किञ्चित्प्रतियोग्यसामानाधिकरण्यमेव विवक्षितम् । न चोक्तदोषः । यत्प्रतियोग्यसामानाधिकरण्यं, तद्वृत्तिप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् । अयं संयोगसामान्याभाववान् सत्त्वादित्यत्र सत्त्वसमानाधिकरणस्य संयोगरूपस्य साध्याभावस्य सामान्याभावात्मकप्रतियोग्यसमानाधिकरणत्वात्, संयोगसामान्याभावत्वस्य संयोगसामान्याभाववृत्तिप्रतियोगितावच्छेदकत्वादतिव्याप्तिविरहात् । संयोगविशेषाभाववान् वृक्षत्वादित्यत्र हेतुसमानाधिकरणस्य संयोगरूपसाध्याभावस्य सामान्याभावात्मकप्रतियोग्यसमानाधिकरणत्वेऽपि संयोगविशेषाभावत्वस्य सामान्याभाववृत्तिप्रतियोगितावच्छेदकत्वविरहादव्याप्तिविरहात् । विशेषाभावत्वस्य विशेषाभाववृत्तिप्रतियोगितायामेवावच्छेदकत्वात् । तथा च स्वाश्रयासमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वं पर्यवसानार्थः । स्वपदेनावच्छेद्यप्रतियोगितापरामर्शादिति न काप्यनुपपत्तिः । नन्विदं लक्षणं द्वित्वावच्छिन्नवह्न्यभावादिकमादाय सदनुमानाव्याप्तम् । अथ द्वित्वावच्छिन्नवह्न्यभावः प्रतियोगिसमानाधिकरण एवेति न तमादायाव्याप्तिरिति चेद्, न । प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यस्य तदर्थस्योक्तत्वात् । तस्य च द्वित्वा(वच्छिन्न)वह्न्यभावेऽपि सत्त्वेनाव्याप्तितादवस्थ्यात् । अथ प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमित्यत्र सामानाधिकरण्याभावोऽर्थः । स च यत्किञ्चित्प्रतियोगिसत्त्वयैव नास्ति । तथा च द्वित्वावच्छिन्नाभावप्रतियोगितावच्छेदकं द्वित्वं वह्नित्वं च । तन्मध्ये वह्नित्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिक-

---

१. 'प्तिः' क. पाठः.

रण्यसत्त्वान्न द्वित्वावच्छिन्नाभावमादायाव्याप्तिरिति चेद्, न। एवं सति वह्निघटो-भयवान् धूमादिति व्यभिचारिण्यतिव्याप्तेर्दुष्परिहरत्वात्। धूमसमानाधिकरणद्वित्वावच्छिन्नाभावप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणत्वाद् द्वित्वावच्छिन्नाभावस्य। अत एव द्वित्वावच्छिन्नाभावमादायाव्याप्तिवारणायाव्यासज्ज्यवृत्तिप्रतियोगिकत्वमभावविशेषणमित्यपि कस्यचित् कल्पनमपास्तम्। एवं सत्युक्तव्यभिचारिण्यतिव्याप्तेर्दुष्परिहरत्वात्। वह्निघटोभयवृत्तिद्वित्वस्य धूमसमानाधिकरणाव्यासज्ज्यवृत्तिप्रतियोगिकाभावप्रतियोगितानवच्छेदकत्वात्। तस्माद् द्वित्वावच्छिन्नाभावमादाय लक्षणाव्याप्तिर्दुष्परिहरेति।

अत्र केचित् — द्वित्वावच्छिन्नाभावानङ्गीकारेण लक्षणमिदम्। तेन धूमवति वह्न्यभावस्याभावान्न धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमिति नाव्याप्तिः। नन्वेवं घटपटोभयवानयं धूमादिति व्यभिचारिणि लक्षणस्यातिव्याप्तिरिति दोषः। धूमसमानाधिकरणस्य घटाभावस्य पटाभावस्य च प्रतियोगिताया द्वित्वस्य व्यासज्ज्यवृत्तितया अतिप्रसक्तत्वेनानवच्छेदकत्वादिति चेद्, न। घटाभावपटाभावयोर्धूमसमानाधिकरणतया तादृशाभावप्रतियोगितात्वेनानुगतप्रतियोगितानतिप्रसक्ततया द्वित्वस्य तदवच्छेदकत्वात्। नन्वेवमपि अयमात्मत्वद्रव्यत्वोभयवान् गुणवत्त्वादित्यादावतिव्याप्तिः। गुणवत्त्वसमानाधिकरणात्म(त्व)विरहसत्त्वेऽपि द्रव्यत्वविरहासत्त्वेन तदुभयवृत्तिद्वित्वस्य तादृशाभावाप्रतियोगिवृत्तेस्तदनवच्छेदकत्वादिति चेद्, न। तत्राव्यभिचारसत्त्वेऽपि द्वित्वावच्छिन्नेन हेतोः सामानाधिकरण्याभावादतिव्याप्त्यनवकाशात्। न च तादृशाभावप्रतियोगितानवच्छेदकद्वित्वावच्छिन्नद्रव्यत्वसामानाधिकरण्यस्य हेतौ सत्त्वात् कथं नातिव्याप्तिरिति वाच्यम्। प्रतियोगितानवच्छेदकपर्याप्त्यधिकरणसामानाधिकण्यस्य तदर्थत्वात्। तस्य च तत्राभावात्। द्वित्वपर्याप्त्यधिकरणमिलितासामाधिकरण्यात्। नन्वेवमपि घटत्वद्रव्यत्वोभयवानयं गुणवत्त्वादित्यत्रातिव्याप्तिः। द्वित्वस्य हेतुसमानाधिकरणाभावाप्रतियोगिनि द्रव्यत्वेऽपि वृत्त्या प्रतियोगितानवच्छेदकत्वात्। तदवच्छिन्नघटत्वद्रव्यत्वोभयसामानाधिकरण्यसत्त्वाच्च गुणवत्त्वस्येति चेद्, न। हेतुसमानाधिकरणाभावप्रतियोगितानधिकरणपर्याप्तवृत्तिकेतरधर्मत्वस्यैवोक्तप्रतियोगिताव-

---

१. 'द्दा' क. पाठः. २. 'द्दा' क. पाठः, ३. 'वयो' क. पाठः.

च्छेदकत्वेन विवक्षितत्वात् । भवति घटत्वद्रव्यत्वोभयवृत्ति द्वित्वं हेतुसमानाधिकरणाभावप्रतियोगितानधिकरणद्रव्यत्वपर्याप्तवृत्तिकभिन्नं, द्वित्वस्यैकमात्राश्रयापर्याप्तवृत्तिकत्वात् । तथा च तत्र द्वित्वं प्रतियोगितावच्छेदकमेवेति नातिव्याप्तिरिति ।

वस्तुतस्तु व्यासज्ज्यवृत्त्यभावाङ्गीकारपक्षेऽपि द्वित्वावच्छिन्नप्रतियोगिकवह्न्यभावमादाय न लक्षणाव्याप्तिः । तथाहि — हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववदवृत्तिस्वविशिष्टकत्वमेवात्रोक्तप्रतियोगितावच्छेदकत्वेन विवक्षितम् । अस्ति च धूमसमानाधिकरणद्वित्वावच्छिन्नवह्न्यभावप्रतियोगितावच्छेदकद्वित्वावच्छिन्नाभाववद्वह्निमति वह्नित्वावच्छिन्नस्य वृत्तिरिति वह्नित्वे तदनवच्छेदकत्वम् । प्रतियोगितावच्छेदके च यावत्त्वं विशेषणम् । तेन वह्नित्वरूपप्रतियोगितावच्छेदकावच्छिन्नाभाववदवृत्तिस्वविशिष्टकत्वस्य वह्नित्वेऽपि भावादव्याप्तिरिति दूषणं निरस्तम् । वह्नित्वस्य द्वित्वरूपप्रतियोगितावच्छेदकावच्छिन्नाभाववद्वृत्तिस्वविशिष्टकतया यावत्पदेन तद्दोषनिरासात् । अत एवायं वह्निघटोभयवान् धूमादित्यत्र नातिव्याप्तिः । धूमसमानाधिकरणद्वित्वावच्छिन्नाभावप्रतियोगितावच्छेदकानां वह्नित्वघटत्ववह्निघटोभयवृत्तिद्वित्वानामवच्छिन्नस्याभाववति द्वित्वविशिष्टस्यावृत्तितया द्वित्वे निरुक्तप्रतियोगितावच्छेदकत्वसत्त्वात् ।

यद्वा हेतुसमानाधिकरणाभावप्रतियोगितात्वावच्छिन्नान्यूनानतिरिक्तवृत्तित्वमिह तत्प्रतियोगितावच्छेदकत्वं विवक्षितम् । धूमसमानाधिकरणद्वित्वावच्छिन्नवह्न्यभावप्रतियोगितात्वावच्छिन्नस्य वह्नित्वं न्यूनवृत्त्येव, तदाश्रयघटावृत्तित्वात् । तथा च न वह्नित्वं द्वित्वावच्छिन्नाभावप्रतियोगितावच्छेदकमिति नाव्याप्तिशङ्का । द्वित्वावच्छिन्नसाध्यकव्यभिचारिणि च द्वित्वं तादृशप्रतियोगितात्वावच्छिन्नान्यूनानतिरिक्तवृत्त्येवेति नातिव्याप्तिरिति ।

अथवा प्रतियोग्यसामानाधिकरण्यपदस्य साध्यतावच्छेदकावच्छिन्नासामानाधिकरण्यमर्थः । व्यासज्ज्यवृत्तिप्रतियोगिकवह्न्यभावस्तु न वह्नित्वावच्छिन्नासमानाधिकरण इति न तमादाय सद्धेतुत्वव्याप्तिशङ्का । न चैवं सद्धेतौ सर्वत्राव्याप्तिः, धूमसमानाधिकरणाभावस्य वह्नित्वावच्छिन्नवह्निसामानाधिकरण्यनियमेनोक्तार्थस्य तत्राप्रसिद्धेरिति वाच्यम् । आरोप्यसम्बन्धेन साध्यतावच्छेदकावच्छिन्नेनासामानाधिकरण्यस्य विवक्षितत्वात् । तच्च सद्धेतुस्थलेऽप्यस्त्येव । अन्ततः समवायसम्बन्धावच्छिन्नवह्न्यभावस्यैव तादृशत्वात् । न च तथा सत्यव्याप्तिः, तादृशाभावप्र-

तियोगितावच्छेदकत्वाद् वह्नित्वस्येति वाच्यम् । तादृशाभावे आद्यसामानाधिकरण्यप्रविष्टसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वाभावस्यैव विवक्षितत्वादिति प्रागेवोदितत्वात् । अत एव संयोगसामान्याभाववान् सत्त्वादित्यत्र नातिव्याप्तिः, संयोगरूपस्य साध्याभावस्य साध्यतावच्छेदकसामान्याभावत्वावच्छिन्नासामानाधिकरण्यनियमात् । संयोगविशेषाभावसाध्यके नाव्याप्तिः, संयोगस्य साध्याभावस्य विशेषाभावत्वावच्छिन्नसामानाधिकरण्यनियमात् ।

वस्तुतस्तु प्रतियोग्यसमानाधिकरणमित्यत्र प्रतियोगित्वसामानाधिकरण्योभयाभावावच्छिन्नसाध्यकत्वमर्थः । द्वित्वावच्छिन्नाभावस्तु न तथा । साध्यतावच्छेदकावच्छिन्नेन सह प्रतियोगित्वसामानाधिकरण्ययोरुभयोरपि सत्त्वेन तदुभयाभा(वा)वच्छिन्नसाध्यकत्वस्य तादृशाभावेऽभावात् । सद्धेतौ घटाद्यभावस्तादृशः । साध्यस्य तेन सह प्रतियोगित्वासत्त्वेन तदुभयाभा(वा)वच्छिन्नत्वस्य सत्त्वात् । एकसत्त्वेऽपि द्वित्वावाच्छिन्नाभावसत्त्वात् । व्यभिचारिणि तु साध्याभाव एव तादृशः । प्रतियोगित्वसत्त्वेऽपि साध्यस्य तत्सामानाधिकरण्याभावेन तदुभयाभावावच्छिन्नत्वसत्त्वात् । अत एव संयोगसामान्याभावसाध्यकेऽपि नातिप्रसङ्गः । संयोगस्य सामान्याभावरूपसाध्येन सहासमानाधिकरणतया तस्य प्रतियोगित्वसामानाधिकरण्योभयाभावावच्छिन्नत्वात् । संयोगविशेषाभावसाध्यके च नाव्याप्तिः । संयोगस्य विशेषाभावसामानाधिकरण्यप्रतियोगित्वयोरुभयोरपि सत्त्वेनोभयाभावावच्छिन्नत्वाभावादिति युक्तमुत्पश्यामः ।

ननु द्रव्यत्वसाध्यके गुणकर्मान्यत्वविशिष्टसत्त्वे हेतौ लक्षणाव्याप्तिः । सत्त्वरूपहेतुसमानाधिकरणाभावप्रतियोगित्वाद् द्रव्यत्वस्य । न च गुणकर्मान्यत्वविशिष्टसत्त्ववति न द्रव्यत्वाभाव इति नाव्याप्तिरिति वाच्यम् । एवं सति व्यभिचारिण्यतिव्याप्तेः । आर्द्रेन्धनप्रभवत्वविशिष्टवह्निमति धूमाभावाभावादिति चेद्, न । यद्धर्मावच्छिन्नसाधनसमानाधिकरणाभावाप्रतियोगित्वमित्यर्थाद्, गुणकर्मान्यत्वविशिष्टसत्त्वसमानाधिकरणाभावप्रतियोगित्वं न द्रव्यत्वस्येति नाव्याप्तिः । व्यभिचारिण्यार्द्रेन्धनप्रभववह्नित्वेन धूमव्याप्यतास्त्येव, वह्नित्वेन तु नास्त्येवेति नातिप्रसङ्गः । अत्यन्ताभावपदं च विरोध्यभावपरम् । अन्यथा अयं घटाभाववान् पटाभाववत्त्वादिति व्यभिचारिण्यतिव्याप्तिप्रसङ्गात् । अत्यन्ताभावत्वस्य साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वात् । अभावप्रतियोगिकाभा-

कारात् । भावप्रतियोगिकाभावप्रतियोगितायाश्चाभाववृत्तिधर्मानवच्छेद्य- विरोधिपरत्वे च भावस्यैवाभावविरोधित्वात् प्रतियोगितावच्छेदकमभावत्वं ति नातिप्रसङ्गः ।

पक्षधरमिश्रास्तु — अत्यन्ताभावपदं ग्राह्यसामानाधिकरण्यविरोधिसंसर्गा- मवश्यं वाच्यम् । तेन दैशिकसामानाधिकरण्येऽत्यन्ताभावस्य, कालिकसा- करण्ये ध्वंसप्रागभावयोर्लाभः । अन्यथा यदा घटत्वं तदा घट इति का- क्तिव्याप्यता जातौ प्रसज्ज्येत । महाप्रलये घटत्ववति घटध्वंससत्त्वेऽपि ताभावाभावेन घटत्वस्य तादृशात्यन्ताभावप्रतियोगितानवच्छेदकत्वात् । न प्रलये घटध्वंसवत् तदत्यन्ताभावोऽप्यस्त्येव, तत्प्रतियोगितावच्छेदकमेव ति नातिव्याप्तिरिति वाच्यम् । तथा सति गोत्वाश्वत्वयोरपि कालिकव्या- यात् । गोत्ववति कालेऽश्वत्वात्यन्ताभावस्यापि सत्त्वादिति वदन्ति ।

अत्र शङ्क्यते — प्रलयेऽत्यन्ताभावसत्त्वेन तस्य चात्यन्ताभावस्य तत्का- व्यक्त्यसमानकालत्वेन प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्य- प्रतियोगित्वेन व्यक्तेर्जातिनिरूपितव्यापकताया अप्रसङ्गः, जातौ तु विद्यमानस्यापि जात्यत्यन्ताभावस्य सकलकालोपाधौ प्रतियोगिसमान- नियमाद् विशिष्टाभावप्रतियोगित्वस्य तत्रासत्त्वादव्याप्तिनिरासादिति ।

अत्रायमाशयः — पक्षधरमिश्राणां कालिकव्याप्तावन्वयव्यतिरेकाभ्यां ध्वं- भावगर्भव्यभिचारज्ञानस्य, दैशिकव्याप्तावत्यन्ताभावगर्भव्यभिचारज्ञानस्य(च) धकत्वाद् ग्राह्यसामानाधिकरण्यविरोधिसंसर्गाभावपरत्वमावश्यकम् । तदुक्तं मिश्रैः — तत्र तदत्यन्ताभावसत्त्वेऽपि ध्वंसप्रतियोगित्वज्ञानस्य विरोधि- रे ।

अत्र काश्चित् — अत्यन्ताभावपदमावश्यकम्, अन्यथा संयोगवान् गुरु- यत्र गुरुत्ववति काले यत्किञ्चित्संयोगावश्यंभावेन पूर्वसंयोगध्वंससत्त्वेऽपि सामान्यस्य गुरुत्वव्यापकता कालिकी हीयेत । गुरुत्वसमानाधिकरणसक- गध्वंसस्य तत्तत्कालोत्पन्नस्यानतिप्रसक्ततया संयोगत्वस्य प्रतियोगितायाम- कत्वात् । अत्यन्तपददाने तु न दोषः । गुरुत्वकाले संयोगात्यन्ताभाव- पि तस्य प्रतियोगिसमानकालत्वात् । प्र(त्य ? ति)योग्यसमानकालात्यन्ता- तियोगितानवच्छेदकत्वस्य संयोगत्वे सत्त्वादिति । तदसत् । एकत्वस्याधि-

करणविशेषणतायाः प्रागेवोक्तत्वात्। तथा च गुरुत्वाधिकरणीभूतयत्किञ्चिदेककालवृत्तिग्राह्यसामानाधिकरण्यविरोध्यभावप्रतियोगितावच्छेदकभिन्नत्वं पर्यवस्यति। तच्च संयोगत्वेऽस्त्येव। भिन्नभिन्नकाले गुरुत्वाश्रयीभूते सर्वसंयोगध्वंससत्त्वेऽपि एकस्मिन् गुरुत्वाधिकरणकाले तावद्ध्वंसासत्त्वादिति।

(अत्राभावे ग्राह्यसामानाधिकरण्यविरोधित्वं) ग्राह्यसामानाधिकरण्यविरोधितावच्छेदकावच्छिन्नत्वम्। विरोधि(क?)तावच्छेदकं च दैशिक्यामत्यन्ताभावत्वादि, कालिक्यां तु ध्वंसत्वं प्रागभावत्वं च। व्याप्तौ च वस्तुतो विरोधितावच्छेदकं प्रविष्टं, न तु विरोधितावच्छेदकत्वेन तस्य ज्ञानमपेक्षितं, येन विरोधित्वस्य सहानवस्थाननियमलक्षणस्य प्रवेश आत्माश्रयादिशङ्का स्यात्। नन्ववच्छेदकत्वमवच्छित्तिधीजनकत्वम्। तच्च नियमगर्भत्वेन व्याप्तिगर्भमित्यात्माश्रयादि दुर्वारमिति चेत्।

अत्र केचित्—[1]अवच्छेदकत्वं स्वरूपसंबन्धात्मकमेव। अन्यथा घटजनकतावच्छेदकं दण्डत्वं, न चक्रभ्रमजनकत्वमनतिप्रसक्तमित्यत्र नियामकाभावप्रसङ्गात्। तथा चात्रापि स्वरूपसंबन्धात्मकमेवावच्छेदकत्वम्। यथा च तथा सति नात्माश्रयादि तथा वक्ष्यत इति वदन्ति।

तच्चिन्त्यम्। एवं सति अयं प्रमेयधूमवान् वह्नेरित्यत्र वह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य स्वरूपसंबन्धात्मकस्य लघुनि धूमत्व एव भावेन प्रमेयधूमत्वे गुरुणि तदभावेन व्यभिचारिण्यतिव्याप्तेर्दुष्परिहरत्वात्। अत एवानतिप्रसक्तलघुधर्मान्तराघटितशरीरत्वे सत्यनतिप्रसक्तत्वमवच्छेदकत्वं नीलधूमत्वादिव्यावृत्तम(त्य? न्य)त्रेतीहापि तदेव विवक्षितमिति निरस्तम्। प्रमेयधूमत्वादावनतिप्रसक्तधूमत्वघटितशरीरतया प्रतियोगितानवच्छेदकत्वप्रसङ्गेन व्यभिचारिण्यतिव्याप्तेस्तादवस्थ्यात्। तस्मादनतिप्रसक्तत्वमात्रमिहावच्छेदकत्वं लघुगुरुसाधारणमवधेयम्। न च प्रतियोगिता तत्तत्स्वरूपरूपा, तदतिप्रसक्तमेव धूमत्वादीति व्यभिचारिण्यतिव्याप्तिरिति वाच्यम्। प्रतियोगितात्वेनानुगमस्य प्रागेवोक्तत्वात्। ननु प्रतियोगितात्वमपि तासु नानुगतमेकमस्तीत्यननुगमः सर्वथापि भवत्येवेति चेद्, न। तादृशात्यन्ताभावनिरूपितत्वस्यानुगतधर्मस्य सर्वत-

---

१. 'स' क. पाठः.

त्प्रतियोगितासाधारणस्य सत्त्वादनुगमसंभवात् । नन्वेवमपि यदा गोत्वं तदा गौरित्यत्राव्याप्तिः । गोत्वसमानकालीननानागोध्वंसप्रतियोगितानवच्छेदकत्वाद् गोत्वस्य । नहि तत्राप्यभाव एकोऽस्ति, येन तत्प्रतियोगितात्वेनानुगतप्रतियोगितानां गोत्वमवच्छेदकं भवेदिति चेद्, न। ऐकाधिकरण्यावच्छिन्नत्वेन तत्रापि ध्वंससमुदायानुगमात् । तेन च प्रतियोगिताया अनुगमसंभवात् । अत एव प्रतियोगितात्वेनानुगमे आत्माश्रयः, प्रतियोगितात्वस्य स्वरूपसंबन्धघटितस्य व्याप्तिघटितत्वादित्यपि दूषणमपास्तम् । अभावनिरूपितत्वेनैव तत्रानुगमेन प्रतियोगितात्वस्याप्रवेशात् ।

नन्वयं वह्निमदाश्रयो धूमवदाश्रयत्वादित्यादौ नानाव्यक्तिसाध्यतावच्छेदकसद्धेतावव्याप्तिः । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वात् तत्तद्वह्नीनाम् । किञ्च, पर्वतो वह्निमानित्यत्राप्यव्याप्तिरेव । धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकमहानसीयत्वावच्छिन्नवह्नित्वादिप्रविष्टतया वह्नित्वस्य तदनवच्छेदकत्वाभावादिति चेद्, न । तादृशाभावप्रतियोगितानवच्छेदकत्वं यद्धर्मावच्छिन्नमित्यर्थो भवति । उक्तस्थले तत्तद्वह्नेः प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वावच्छिन्नत्वेन न प्रतियोगितावच्छेदकता, किन्तु तत्तद्वह्नित्वावच्छिन्नत्वेनैव । तेन रूपेण व्यापकतावच्छेदकत्वं नास्त्येवेति न तत्र दोषः । वह्नित्वमपि महानसीयवह्नित्वत्वाद्यवच्छिन्नं प्रतियोगितावच्छेदकं न तु वह्नित्वत्वावच्छिन्नम् । अतो न तत्राव्याप्तिः । नन्वन्योन्याभावस्य व्याप्यवृत्तित्वाद् यदि वह्नित्वे(न?) तत्तद्वह्नित्वघटकतया प्रतियोगितावच्छेदकत्वं, तदा वह्नित्वत्वावच्छिन्नवह्नित्वेऽपि प्रतियोगितावच्छेदकभिन्नत्वमसंभवीति चेद्, न । वह्नित्वत्वावच्छेदेन वह्नित्वे प्रतियोगितावच्छेदकत्वात्यन्ताभावस्य विवक्षितत्वात् । प्रतियोगितावच्छेदकत्वत्वविशिष्टप्रतियोगितावच्छेदकत्वसापेक्षज्ञानतयास्य प्रतियोगितावच्छेदकभेदापेक्षया गुरुप्रतिपत्तिकत्वेऽप्युक्तयुक्त्या आवश्यकत्वात् । ननु सामानाधिकरण्यं समानेनाधिकरणेन सम्बन्धः । सम्बन्धत्वं च विशिष्टप्रत्ययजनकत्वगर्भमित्यात्माश्रयादिस्तथापि दुर्वार एवेति चेद्, न । सम्बन्धस्य प्रवेशेऽपि सम्बन्धत्वस्याप्रवेशेनोक्तदोषाभावात् । ननु तथापि शुद्धस्य सम्बन्धस्य कथं भानमिति सम्बन्धत्वभानं प्रकारतया वाच्यमेवेति चेद्, न । संयोगत्वादिना गृहीतस्य सम्बन्धस्य व्याप्तिघटकत्वात् । ननु व्याप्तिज्ञानस्यानुमितिजनकताग्रहो

न सम्बन्धत्वज्ञानमन्तरेण । नहि संयोगज्ञानत्वादिनानुमितिहेतुताग्रहः, व्यभिचारादित्युक्तदोषस्तदवस्थ एवेति चेद्, न । भ्रान्तोऽसि । अनुमितिकरणताग्रहे ग्राह्यकारणताप्रविष्टव्याप्तेरिव संबन्धत्वप्रविष्टव्याप्तेरपि प्रवेशे क्षत्यभावात् । प्राथमिकव्याप्तिग्रहे तत्प्रवेशस्यैव वारणीयत्वात् । किञ्च, व्याप्तिर्न सर्वसाधारण्येकेति तत्तद्व्याप्तिज्ञानत्वेन तत्तदनुमितित्वेन हेतुहेतुमद्भावो ग्राह्यः । स च संयोगज्ञानत्वादिनापि ग्रहीतुं शक्यत एवेति न तत्रापि संबन्धत्वज्ञानापेक्षा ।

ननु व्यधिकरणधूमवह्न्योः सामानाधिकरण्यं नास्तीति तयोर्व्याप्तिर्न स्यात् । न च समानाधिकरणवृत्तिधर्मवत्त्वमित्यर्थः । तच्च धूमत्वमादाय सर्वत्राप्यस्तीति वाच्यम् । तादृशयत्किञ्चिद्धर्मवत्त्वस्य मेयत्वमादायातिप्रस(क्ता ? क्तत्वा)त् । यावद्धर्मवत्त्वस्य चात्राप्यभावात् । तद्धूमत्वादेरन्यधूमावृत्तित्वात् । न च सामानाधिकरण्यावच्छेदकधर्मवत्त्वमर्थः, तच्च धूमत्वमेवेति नातिप्रसङ्ग इति वाच्यम् । तथा सति तावन्मात्रस्यैवादुष्टतया पूर्वदलवैयर्थ्यापातादिति ।

मैवम् । यद्धर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकावाच्छिन्नस्य साध्यस्य सामानाधिकरण्यं, तद्धर्मावच्छिन्नत्वस्य लक्षणार्थत्वात् । तच्च व्यधिकरणधूमस्याप्यस्तीति नोक्तदोषः । यदि च समानाधिकरणयोरेव व्याप्तिरिति मतं, तदा यथाश्रुतमेवादरणीयम् । न च तथा सत्यवच्छेदकपर्यन्तधावनवैयर्थ्यम् । तावता साधनसमानाधिकरणाभावाप्रतियो(ग्य ? गि)साध्यसमानाधिकरणत्वस्यैवाविकलत्वात् । अत एव मणिकृतापि यद्वेत्यादिना समानाधिकरणमात्रव्याप्तिलक्षणं कुर्वता तथैव लिखितमिति वाच्यम् । इयं गन्धवती पृथिवीत्वादित्यत्राव्याप्तेस्तथा सति दुर्वारत्वापातात् । पृथिवीत्वसमानाधिकरणाभावप्रतियोगित्वात् सर्वगन्धानाम् । तस्मादत्राप्यवच्छेदकविवक्षावश्यिकेति नोक्तशङ्कावकाशः । मणिकारस्यापि व्यधिकरणयोः सामानाधिकरण्याभावान्न व्याप्तिरित्येवाभिमतं, न त्वत्रावच्छेदकविवक्षा न कार्येति ।

पक्षधरमिश्रास्तु — समानाधिकरणव्याप्तिपक्षेऽवच्छेदकाविवक्षा मणिकारस्यानभिमतैव । न चैवमियं गन्धवती पृथिवीत्वादित्यत्राव्याप्तिः कथमुद्धर्तव्येति वाच्यम् । स्वाधिकरणीभूतयद्व्यक्तिनिष्ठाभावाप्रतियोगिनी या साध्यव्यक्तिः, तद्व्यक्त्या सह स्वाधिकरणीभूततत्तद्व्यक्तिवृत्तित्वं (इति ?) व्याप्तिरित्यर्थात् । अस्ति च पृथिवीत्वाधिकरणभूतघटनिष्ठाभावाप्रतियोगित्वं घटीयगन्धव्यक्तेरिति

घटीयगन्धेन सह पृथिवीत्वस्य घटरूपाधिकरणवृत्तित्वमेव व्याप्तिः। एवं पटादिगन्धेनापि सह तत्तदधिकरणवृत्तित्वमेव व्याप्तिरिति न काप्यनुपपत्तिः। न चैवं पृथिवीत्ववद् द्रव्यत्वमपि गन्धव्याप्यं स्यादेवेति वाच्यम्। द्रव्यत्वस्य घटादिरूपाधिकरणावच्छिन्नस्य व्याप्यत्वापादन(मि? इ)ष्टापत्तेः। द्रव्यत्वत्वेन च न तस्य गन्धव्याप्यता। द्रव्यत्वत्वावच्छिन्नद्रव्यत्वस्य गन्धं विनापि जलादौ सत्त्वात्। पृथिवीत्वत्वावच्छिन्नपृथिवीत्वं न गन्धं विनापि क्वाप्यस्तीति भवति तेन रूपेण तस्य व्याप्यतेत्यप्याहुः।

अत्र शङ्कयते — द्रव्यत्वमेकमेव, तच्चोक्तक्रमेण च गन्धव्याप्यं भवत्येवेति व्याप्यमात्रवृत्तेर्द्रव्यत्वत्वस्य कुतो न गन्धव्याप्यतावच्छेदकत्वमिति।

अत्रायमाशयो मिश्राणां — यद्धर्मावच्छिन्नसाधनाधिकरणीभूतयावद्व्यक्तिनिष्ठाभावाप्रतियोगिता साध्यतावच्छेदकाश्रयस्य, तद्धर्मस्य तत्साध्यतावच्छेदकाश्रयव्याप्यतावच्छेदकत्वम्। अस्ति च पृथिवीत्वत्वावच्छिन्नपृथिवीत्वाधिकरणीभूतयावद्व्यक्तिनिष्ठाभावाप्रतियोगित्वं[1] गन्धत्वाश्रयस्य। पृथिवीत्वाधिकरणे यत्किञ्चिद्गन्धावश्यकत्वात्। अतो भवति पृथिवीत्वत्वं तद्व्याप्यतावच्छेदकं, न तु द्रव्यत्वत्वावच्छिन्नद्रव्यत्वाधिकरणेऽपि सर्वत्र गन्धावश्यकत्वं, येन द्रव्यत्वत्वं तद्व्याप्यतावच्छेदकं भवेदिति दिक्।

एवमन्योन्याभावगर्भव्याप्तिलक्षणम्। अन्यच्च साध्यसामानाधिकरण्यावच्छेदकरूप(व)त्त्वं, साध्याधिकरणतावच्छेदकाधिकरणताप्रतियोगि(क?)त्वं, स्वाधिकरणतान्यूनवृत्त्यधिकरणताप्रतियोगिसाध्यसामानाधिकरण्यादिकमपि व्याप्तिलक्षणमूह्यम्। एवं च साध्याभाववदवृत्तित्वं, साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यं, साध्याभावव्यापकाभावप्रतियोगित्वं, साध्याविनाभूतत्वमित्यादि प्राचीनव्याप्तिलक्षणानामप्युक्तलक्षणकथनपरतया केवलान्वयिसाध्यकाव्याप्त्यादिकं साध्यत्वादिप्रवेशेनात्माश्रयादिकं च न शङ्कनीयमिति संक्षेपः।

इदन्त्ववधेयं — संसर्गाभावः क्वचिदत्यन्ताभावः। स च सति संभवे सामान्याभाव एव प्रवेश्यः। यावद्विशेषाभावापेक्षया लघुत्वाल्लघुप्रतिपत्तिकत्वाच्च। अत एव सामान्यावच्छिन्नप्रतियोगिकश्चाभावः पृथगेव। अन्यथा वायौ प्रसिद्धरू-

---

1. 'गिकत्वं' ख. पाठः.

पत्रयाभावनिश्चयेऽपि वायौ रूपं न वेति संशयो न स्यात्। निश्चिते तदभावादिति मणिकृतः।

अत्र वदन्ति — एतावन्त्येव रूपाणि। तानि न सन्ति वायाविति निश्चयदशायां संशयस्यासिद्धतया रूपान्तरसंभावनाकाले संशयो वाच्यः। तथा च यथा रूपकोटौ रूपत्वेन संभावितं व्यक्त्यन्तरं विषयः, एवं तदभावकोटावपि व्यक्त्यन्तराभावो विषयोऽस्तु, किं सामान्याभावेन। किञ्च, समानप्रकारकसंशयस्य तादृशनिश्चयनिवर्त्यतया विशेषतस्तद्रूपाभावत्वेन निश्चयेऽपि रूपाभावत्वेनास्तु तेषामेव संशयविषयत्वं तत्तद्रूपत्वेन व्यतिरेकानिश्चयेऽपि रूपत्वेन रूपाणामिवेति।

अत्राहुः — एतावन्त्येव रूपाणीत्यवधारणभावेऽपि रूपान्तरसंभावनाविरहेऽपि संशयस्यानुभवसिद्धतया तदभावस्य संशयविषयत्वाभावः। किञ्चेत्यपि न। रूपत्वाश्रयाभावत्वेन निश्चयात्। रूपत्वावच्छिन्नाभावत्वेन तथात्वे सामान्याभावसिद्धेः। न च रूपत्वाश्रययावदभावत्वेन संशयः, रूपत्वाश्रयेण केनापि सह यावदभावस्याविरोधेन तेन रूपेण संशयायोगात्। स्वस्वाभावयोरेव विरोधात्। विरोधिनोरेव संशयकोटित्वादिति विशेषाभावस्य स्वप्रतियोगिकस्य निश्चये सामान्याभाव एव संशयकोटिः, स्वप्रतियोगिकत्वादिति पक्षधरमिश्राः।

अत्रेदं शङ्कयते — प्रसिद्धरूपातिरिक्त रूपत्वसंशयं विना संशयोऽयमसिद्ध एव। तथा च रूपत्वेन शङ्कितस्याभावः संशयकोटिरस्तु। अस्तु वा यावदभावत्वेनापि संशयः। सहानवस्थाननियतत्वेन ज्ञातयोरेव संशयकोटित्वात्। यावदभावस्यापि प्रतियोगिसहानवस्थाननियतत्वेन ज्ञानात्। किञ्च, संशयो द्वेधा। एको रूपत्वावच्छिन्नरूपकोटिकः। अपरस्तु तत्तद्रूपत्वावच्छिन्नरूपकोटिकः। तत्रान्ते तत्तद्रूपाभावस्य प्रत्येक(स्यै[1]मे)व विरोधितया संशयकोटिता, प्रथमे तु रूपत्वाश्रययावदभावस्यैव विरोधितया संशयकोटित्वं, फलबलेन तथैव विरोधनिश्चयात्। नहि यावदभावस्याधिकरणे निश्चये सति सामान्यावच्छिन्नकोटिकसंशयोऽस्ति। न (याव[1]वा य)त्किञ्चिदभावनिश्चये तादृशसंयोगो नास्तीति। तस्मात् सामान्याभावे मानाभाव इति।

---

१. 'पत्वाभा' क. पाठः.

अत्र पक्षधरमिश्राः — प्रतियोगिभेदेनाभावो न भिद्यते। तथा सति घट-प्रतियोगिकाभावचतुष्टयस्य भेदो न स्यात्। किन्तु प्रतियोगितावच्छेदकभेदात्। तच्चात्राप्यस्त्येव। अन्यन्ताभावे संसर्गस्यान्योन्याभावे तादात्म्यस्य प्रागभाव-ध्वंसयोः प्रतियोग्युत्तरकालपूर्वकालयोरवच्छेदकत्वात्। तथा च रूपसंसर्गप्रति-योगितावच्छेदकावच्छिन्नाभावः सामान्याभाव एव। बाधकं विना संबन्धितावच्छे-दकभेदात् संबन्धि(कः?)पदार्थभेदस्वीकारादिति।

अत्र शङ्क्यते — अन्योन्यात्यन्ताभावयोर्द्वयोरपि प्रतियोगितावच्छेदकं लाघवाद् घटत्वमेव। तथा च तस्याभेदा(द) भेदापत्तिः। ननु तादात्म्यसंसर्गयो-रारोप्यसंसर्गत्वात् तद्भेदात् तयोर्भेद इति चेद्, न। तर्हि क्वचित् प्रतियोगिता-वच्छेदकभेदः, क्वचिदारोप्यसंसर्गभेदोऽभावभेदक इत्यननुगमः। न चारोपविषय-भेदत्वेन भेदकत्वं, तच्च प्रतियोगितावच्छेदकसंसर्गप्रतियोगिभेदसाधारणमिति नाननुगम इति वाच्यम्। तथा सति अधिकरणस्याप्यारोपविषयतया तद्भेदादप्य-भावभेदेऽपसिद्धान्तापातादिति।

अत्र प्रतिभाति — अधिकरणभेदादभावभेदेऽभाव एव धर्मिभिन्नो न सिध्येत्। अधिकरणेनैव तद्व्यवहारोपपत्तेः। नह्यधिकरणाननुगमेनानुगतघटात्य-न्ताभावव्यवहारोऽनुपपन्न इत्यतो युक्त्यन्तरमस्ति भिन्नाभावसाधकम्। अतो बाधकादधिकरणभिन्नारोपविषयभेदेनाभावभेद इति कल्प्यते। गौरवस्य प्रामाणि-कत्वात्। प्रतियोगितावच्छेदकभिन्नत्वविशेषणे मानाभावात्। सामान्याभावस्वी-कारापत्तेश्च फलमुखत्वात्। किञ्च, दण्डी पुरुषो नास्तीत्यत्र शुद्धपुरुषाभावस्या-सत्त्वेऽपि दण्डविशिष्टपुरुषाभावस्यानुभूयमानतया प्रतियोगितावच्छेदकभेदेनाभाव-भेदोऽवश्यमङ्गीकरणीयः। अपि च घटो नास्तीति सामान्याभावावगाहिबुद्धौ विशेषाभावसहस्रस्य विषयतया कल्पने गौरवमिति लाघवादेकाभावसिद्धिः। न च विशेषाभावानामननुगमेऽपि क्लृप्तत्वं साधकमिति वाच्यम्। अननुगमापेक्षया कल्प्यत्वगौरवस्य हीनत्वात्। अन्यथा स्वरूपसंबन्धस्य विशिष्टधीविषयत्वे गतं समवायेन। कर्तृजन्यतायां च घटत्वादेरननुगतस्यापि क्लृप्तत्वा(द)वच्छेदकत्व-प्रसङ्गेन कल्प्यक्षित्यादिकर्त्रापि गतमेव। किं बहुना, द्रव्यत्वगुणत्वकर्मत्वाभाव-समूहस्य सत्ताविरहव्यवहारकत्वापाताद् भिन्नसत्ताविरहोऽपि न स्यात्। न स्याच्च द्रव्यत्वाद्यभावोऽपि। पृथिवीत्वाद्यभावकूटादेव तद्व्यवहारोपपत्तेः। एवं पृथिवीत्व-

घटत्वादेरप्यभावः पृथङ् न स्यात्। तस्माद् विशिष्टबुद्धौ समवायवत् सामान्याभावबुद्धौ हेतुतया लाघवादेकाभावसिद्धिः। किञ्च, द्रव्यं नेति बुद्धिर्द्रव्याभावविषयिणी। घटो न, द्रव्यं नेति बुद्ध्योरन्यतरत्वाद्, घटो नेति बुद्धिवदित्यनुमाने लाघवादेकोऽभावो विषय इति स एव द्रव्यत्वावच्छिन्नान्योन्याभाव इति दिक्।

केचित्तु — मिलिते घटद्वये रूपं नास्तीति बुद्ध्यापत्तिः, यावद्विशेषाभावस्य सामान्याभावं प्रति प्रयोजकस्य प्रत्येकं सत्त्वादित्यतिरिक्तसामान्याभावोऽङ्गीकार्य इत्याहुः। तच्चिन्त्यम्। ऐकाधिकरण्यावच्छिन्नयावद्विशेषाभावस्य सामान्याभावस्य व्यवहारजनकत्वादिति।

नव्यास्तु — एकघटसत्त्वे घटसामान्याभावो नास्तीति प्रतीतिर्न स्यात्। यावद्विशेषाभावस्य सामान्याभावरूपतया तदभावस्य यावद्विशेषरूपस्य तत्राभावात्। तथा च सामान्याभावो यावद्विशेषाभावापेक्षया भिन्नोऽङ्गीकार्यः। न चैवमेकालोकसत्त्वे अन्धकारो नास्तीति प्रतीतिरन्धकारस्यापि तत्रभावात् (तथा च?) सामान्याभावत्वावच्छिन्नत्वापत्तिरिति वाच्यम्। अन्धकारो नास्तीति प्रतीतेर्यावदुद्भूतरूपतेजोविरहो नास्तीत्यर्थः। तथा च यावत्त्वावच्छिन्नाभावस्याभावो व्यासज्यवृत्तिप्रतियोगिक एकसत्त्वेऽप्यविरुद्ध एव। न चात्रापि स एव प्रकारः, व्यासज्यवृत्त्यभावस्वीकारेऽपि सामान्याभावस्य सिद्धत्वादिति वदन्ति।

यत्तु इह रूपं नेति सामान्याकारैव (प्रतीतिः) रूपत्वावच्छिन्नाभावे प्रमाणमिति, तत्तुच्छम्। इयं प्रतीतिरधिकरणेऽभावं, तत्र च रूपप्रतियोगिकत्वं, रूपे च रूपत्ववत्तां विषयीकरोति। तच्च विशेषाभावविषयत्वेऽप्युपपद्यत एवेति न सामान्याभावे मानमिति।

इदं तु विचार्यते — प्रतियोगितावच्छेदकभेदादत्यन्तान्योन्याभावयोरिव प्रागभावध्वंसयोरपि सामान्याभावत्वमस्तु। न च प्रागभावस्य प्रतियोगिकालविरुद्धकालतयानादौ संसारे प्रतियोगियत्किञ्चिद्घटस्य सर्वदा सत्त्वाद् घटत्वावच्छिन्नप्रागभावस्यासं(भाविनि? भवन) यत्किञ्चित्प्रतियोगितावश्य(क)तया च एकघटोत्पत्त्या नाशाप(त्ते? त्ति)रिति वाच्यम्। घटत्वावच्छिन्नप्रागभावस्य घटो भविष्यतीति प्रतीतिसि(द्ध्य? द्ध)स्य प्रतियोग्यविरुद्धकालतया यावत्प्रतियोग्युत्पत्तिनाश्यतया च महालये विनाशाद् ध्वंससामान्याभावत्वे बाधकाभावाच्च। न च ध्वंसस्य प्रतियोगिजन्यतया घटत्वावच्छिन्नयावतां च एकदासम्भावि(त)तया कथं तद-

वच्छिन्नध्वंसस्योत्पत्तिरिति वाच्यम् । यावत्प्रतियोगिजन्यतायां गौरवेण यत्किञ्चित्प्रतियोगिजन्य(त्वं ? त्वस्य) महालयकाले सम्भवेन तदा घटत्वावच्छिन्नध्वंसोत्पत्तौ बाधकाभावात् । किं बहुना, दशघटानामेकदण्डोत्पन्नानां दशसंख्यावच्छिन्नप्रागभावे बाधकाभावः । एवमेकदा नष्टानां तेषां तद्धर्मावच्छिन्नप्रतियोगिकध्वंसे बाधकाभावादिति ।

अत्र ब्रूमः — तत्तद्धटप्रतियोगिकप्रागभावत्वेनैव तत्तद्धटनाश्यता तत्तद्धटविरुद्धकालता च, न तु तन्मात्रप्रतियोगिप्रागभावत्वेन, गौरवात् । तथा च घटत्वावच्छिन्नप्रागभावः कदा वर्तताम्, संसारस्यानादितया यत्किञ्चिद्धटस्य सर्वदा सत्त्वात् । एवं ध्वंसेऽपि तत्तद्धटध्वंसत्वेनैव तत्तद्धटजन्यता, न तु तन्मात्रध्वंसत्वेन, गौरवादिति पर्यवसितं यावत्प्रतियोगिजन्यत्वं ध्वंसस्येति यावद्धटस्यैकदा सत्त्वाभावात् कथं ध्वंसोत्पत्तिः । किञ्च, ऐकाधिकरण्यावच्छिन्नयावद्विशेषाभावं विना न सामान्याभाव इति सर्वानुभवसिद्धं, प्रागभावध्वंसौ प्रतियोगिसमवा(यवृत्तिरि ? यिवृत्ती इ)त्यपि । तथा च विशेषाभावानामैकाधिकरण्याभावात् कथं सामान्याभावयोः ध्वंसप्रागभावयोः सत्तेति न तयोः सामान्याभावत्वम् । अत एव किं बहुनेत्यपि निरस्तम् । किञ्च, तत्प्रागभावध्वंसाधारस्य तदाधारतानियमेनान्यघटाधारतान्यकपाल आपद्येत । प्रसज्यते च घटानामभेदः । तत्प्रागभावजन्यस्य तत्त्वनियमात् । न च सामान्यप्रागभावो न प्रतियोगिजनक इति वाच्यम् । तथा सति प्रागभावत्वव्याकोपात् । दशघटत्वावच्छिन्नध्वंसस्यापि तत्तद्विशेषध्वंससामग्रीप्रसूतत्वेन तदभेदप्रसङ्गात् । ननु विशेषध्वंसाजनकघटान्तरजन्यत्वेन ततोऽस्य भेद इति चेद्, न । एवं सत्यपि विशेषध्वंससामग्र्यामधिकप्रवेशेन तदुत्पत्त्या प्रमाया ज्ञानविशेषत्ववत् तस्य विशेषध्वंसाविशेषत्वापत्तेरित्यास्तां पल्लवेन ।

इदं त्ववधेयम् — अन्योन्याभावगर्भव्याप्तौ प्रतियोग्यसामानाधिकरण्यं न विशेषणम् । अन्योन्याभावस्याव्याप्यवृत्तित्वविरहेणाव्याप्त्यप्रसङ्गात् । न च तदेवासिद्धम् । अभेदस्याबाधितप्रत्यभिज्ञानात् । भेदाभेदयोः परस्परविरोधादिति माणिकृतः ।

अत्र शङ्क्यते — वृक्षत्वेन भेदाभावेन तेन रूपेणाभेदप्रत्यभिज्ञा । संयोगित्वेन भेदधीरस्तु । को दोषः । भेदाभेदयोः परस्परविरोधोऽप्येकावच्छेदेनैव

कल्प्यः, मूले वृक्षः संयोगवानग्रे नेति प्रतीतेः। अन्यथा घटतदत्यन्ताभावयोर्वैय-धिकरण्यदर्शनात् संयोगतदत्यन्ताभावयोरपि तथात्वं स्यादिति (वल्लभाचार्यमते सर्वापेक्षया बलवत्त्वादिति ? ।)

अत्र वदन्ति—संयोगात्यन्ताभावविषयत्वेनैव संयोगवान् नेति बुद्धेरुपपत्तौ न परस्परविरुद्धसंयोगतद्वदन्योन्याभावयोरेकत्र समावेशकल्पना। संयोगवदन्योन्या-भावग्रहकाले संयोगत्वावच्छिन्नसंयोगग्रहस्य तदत्यन्ताभावग्रहहेतोरावश्यकत्वात्। अत एवान्योन्याभाव एवं सति क्वापि विषयो न स्याद्, धर्मात्यन्ताभावविषयत्वेनै-व तद्बुद्ध्युपपत्तेरिति अत्र दूषणमपास्तम्। घटान्योन्याभावधीकाले घटत्वत्ववि-शिष्टघटत्वज्ञानस्य तदत्यन्ताभावधीहेतोरनियमेनान्यथासिद्ध्यभावाद्[1], भावाभावसा-मानाधिकरण्यस्यान्यथानुपपत्तिकल्प्यतया प्रकृतेऽन्योन्यात्यन्ताभावयोरन्यतरविष-यताविनिगमकचिन्तायां संयोगात्यन्ताभावग्रहसामग्रीसत्त्वात् तन्मा(त्रा ? त्र)विषय-त्वेन तत्प्रतीत्युपपत्तेरुक्तत्वाच्च। न चैवं विशिष्टप्रतियोगित्वेनोल्लेखो न स्यादिति वाच्यम्। विशेषणमात्रविषयकस्यापि स्वर्गीत्यत्रैव तादृशोल्लेखदर्शनात्। अत एव गुणे संयोगवदन्योन्याभावो विषय एव तत्प्रतीतेः। संयोगवदभिन्नत्वेनाज्ञानादिति। वस्तुतस्तु यदि संयोगवति तद्वदन्योन्याभावः, तदा घटपटौ भिन्नावितिवदिमौ भिन्नाविति प्रत्ययापत्तिः। द्रव्यभेदे सति द्वित्वादिसङ्ख्योत्पत्तेरिति तत्त्वम्।

यत्तु अभिन्ने धर्मिणि भिन्नधर्मावच्छेदेन वृत्तिरव्याप्यवृत्तिता। न चैत-दन्योन्याभावस्य सम्भवति, तस्मिन् सति धर्म्यभेदस्यैवाभावादित्यन्योन्याभावो नाव्याप्यवृत्तिरिति। तत्तु न। वृक्षत्वेन धर्म्यभेदस्य सत्त्वादिति सङ्क्षेपः।

इति व्याप्तिवादः।

---

## अथ भूयोदर्शनवादः।

नन्वस्तु तावद् व्याप्तिः। तद्ग्रहो न भूयोदर्शनेन। भूयोधिकरणदर्शनस्य

---

1. 'तोर्नैव' क. पाठः.

भूयोरूपदर्शनस्य भूयोनिरूपितदर्शनस्य वा व्यभिचारिसाधारणतयाऽव्यभिचारिण्यसत्त्वेन चानिश्चायकत्वाद्, भूयस्त्वस्याननुगमाच्च । अत एव सकृत्सहचारदर्शनमपि व्यभिचारिसाधारणतया न तन्निश्चायकम् । तथा च सकृदसकृदुदासीनसहचारदर्शनमपि । तर्कस्तु व्याप्तिग्रहमूलकतयानवस्थाकलित एवेति न व्याप्तिग्राहकः । किं बहुना, सहचारस्य व्यभिचार्यव्यभिचारिसाधारणतया संशायकतया न व्याप्तिनिश्चायकत्वं, संशयसामग्र्या निश्चयप्रतिबन्धकत्वात् । यत्तु व्यभिचारसंशय एव तज्जन्यो व्याप्तिनिश्चयप्रतिबन्धकः (न च? इति तन्न । ) ग्राह्यसंशयस्य प्रतिबन्धकत्वे मानाभावेनोत्तेजकाकल्पनाद्; विशेषदर्शनकालीनसंशयकाले निश्चयानुत्पादस्य संशयसामग्रीप्रयुक्तत्वाद् एकमात्रकोटिविशेषादर्शनसहकृतसंशयत्वेन प्रतिबन्धकत्वकल्पनापेक्षया संशयसामग्रीत्वेन प्रतिबन्धकताकल्पनाया लघुत्वाद्, विरोधिसामग्रीत्वेन संशयसामग्र्याः प्रतिबन्धकत्वकल्पनाच्च । न च ग्राह्याभावनिश्चयत्वेन प्रतिबन्धकत्वे गौरवमिति लाघवात् तज्ज्ञानत्वेनैव तथात्वमिति संशयस्यापि प्रतिबन्धकत्वसिद्धिरिति वाच्यम् । तथा सति विशेषादर्शनविशिष्टग्राह्याभावज्ञानाभावस्य निश्चयं प्रति हेतुत्वमिति बाधे सत्यनुमित्यापत्तेः । बाधस्य विशेषदर्शनविशिष्टतया विशिष्टाभावस्य सत्त्वात् । तथा च विपरीतनिश्चयस्य ग्राह्याभावनिश्चयत्वेन संशयस्य च विशेषादर्शनविशिष्टग्राह्यसंशयत्वेन प्रतिबन्धकत्वं वाच्यम् । तथा च द्वितीयकल्पनायां गौरवम् । वस्तुतस्तु विपरीतज्ञानत्वेन यत्र प्रतिबन्धकता, तत्र प्रतिबन्ध्यतावच्छेदकं ग्राह्यज्ञानत्वं, तन्निश्चयत्वं वा । नाद्यः । संशयानन्तरं संशयानुत्पत्तिप्रसङ्गात् । संशयात्मकग्राह्याभावज्ञानसत्त्वात् । नान्त्यः । विपरीतनिश्चयानन्तरं संशयोत्पत्तिप्रसङ्गात् । विपरीतज्ञानस्य ग्राह्यनिश्चय एव प्रतिबन्धकतया संशयोत्पत्तौ बाधकाभावादिति न संशयनिश्चयसाधारणी प्रतिबन्धकता भवतीति तत्त्वम् । तस्मात् सहचारादिधर्मदर्शनस्य व्यभिचारसंशयसामग्रीत्वेन व्याप्तिग्रहप्रतिबन्धकत्वमिति ।

अत्र मणिकृतः — व्यभिचारज्ञानविरहसहकृतं सहचारज्ञानं व्याप्तिग्राहकम् । व्यभिचारज्ञानं निश्चयः शङ्का च । सा च क्वचिदुपा(दि?धि)सन्दे(ह?हात्) क्वचित् साधारणधर्मदर्शनादेः । तदभावश्च क्वचित् तर्कात्, क्वचित् स्वतः सिद्ध एवेति न वानवस्था न वा व्याप्तिग्रहानुपपत्तिरिति ।

---

१. 'कृत्वक' क. पाठः.

अत्र वदन्ति — व्यभिचारज्ञानमिह साध्याभाववद्वृत्ति(त्व)ज्ञानं हेतौ वा, स्वसमानाधिकरणाभावप्रतियोगित्वज्ञानं साध्ये वा। नाद्यः। केवलान्वयिनि साध्याभावाप्रसिद्ध्या तदभाववद्वृत्तित्वज्ञानासम्भवेन तदभावासम्भवाद् व्याप्त्यग्रहप्रसङ्गात्। नान्त्यः। व्यभिचारव्याप्त्योः न परस्पराभावरूपत्वमित्यग्रे मणौ प्रतिपादनात् तद्विरोधः, उक्तव्यभिचारविरहरूपत्वाद् व्याप्तेः। न च व्याप्तेर्व्यभिचाराभावविशिष्टसामानाधिकरण्यरूपतया न व्यभिचारविरहरूपत्वमिति न तद्विरोध इति वाच्यम्। तथापि व्यभिचारज्ञानाभावमात्रं वा व्याप्तिनिश्चायकम्, उत तन्निश्चयाभावः। आद्ये हेतुमत्तया निश्चिते साध्यसन्देहात्मकव्यभिचारज्ञानसत्त्वान्न क्वाप्यनुमान(प्र)वृत्तिः स्यात्। अन्त्ये सन्दिग्धानैकान्तिकोच्छेदः। किञ्च, अत्यन्ताभावगर्भायामन्योन्याभावगर्भव्यभिचारज्ञानस्यापि प्रतिबन्धकत्वाद् आभासाधिक्यापत्तिः। किं बहुना, साध्याभाववद्वृत्तित्वज्ञानस्य क्वचिद्, हेत्वधिकरणनिष्ठाभावप्रतियोगित्वज्ञानस्य क्वचित् प्रतिबन्धकत्वमित्यननुगमः। अपि च परकीयव्यभिचारज्ञाने सत्यपि व्याप्तिग्रहणात् स्वव्यभिचारज्ञानस्याभावः कारणं वाच्यः। तथा च यस्य व्यभिचारज्ञानं नास्ति, तस्य व्याप्तिग्रहो न स्यात्। न च व्यभिचारज्ञानमात्रं स्वपरसाधारणं प्रतियोगि, तदभावो[१] यदात्मनि, तत्र व्याप्तिग्रह इति परकीयव्यभिचारज्ञानाभावमादायैव तत्र व्याप्तिग्रह इति वाच्यम्। प्रत्युत्पन्नव्यक्तिद्वये पुरुषान्तरीयज्ञानाविषये व्याप्त्यग्रहप्रसङ्गात्। व्यभिचारज्ञानाप्रसिद्ध्या तदभावासम्भवात्। न चैश्व(ये?रं) व्यभिचारज्ञानं तत्र नास्तीति वाच्यम्। अव्यभिचारिणि व्यभिचारग्रहे ईश्वरस्य भ्रान्तत्वापत्तेरिति।

अत्राहुः — हेत्वधिकरणत्वेन ज्ञायमानधर्मिनिष्ठाभावप्रतियोगित्वनिश्चयविषयत्वाभावो यत्र साध्ये यस्य यदास्ति, तस्य तदा तद्व्याप्तिग्रहः। प्रत्युत्पन्नस्थले तत्प्रतियोगित्वाभावघटितव्याप्तिग्रहस्य तत्प्रतियोगित्वज्ञानमन्तरेणासम्भवाद् अभावज्ञानस्य प्रतियोगिज्ञानजन्यतानियमाद् अन्ततस्तत्पुरुषीयव्यभिचारज्ञानमेवास्तीति न कोऽपि दोषः। अत एव पक्षीयव्यभिचार(ज्ञान?)संशयो न प्रतिबन्धकः, न वा सन्दिग्धानैकान्तिकोच्छेदः। न चैवमुपाधिसन्देहाद्याहितव्यभिचारसंशयोऽपि निश्चितहेतुमति साध्यसन्देहरूपः प्रतिबन्धको न स्यादिति वाच्यम्। अन्याहितस-

१. 'वयोर्यदा' क. पाठः.

न्देहाभावत्वेनापि व्याप्तिग्रहहेतुत्वमित्यग्रे वक्ष्यमाणत्वात् । अत एव साध्याभाववद्वृत्तित्वज्ञानमप्युक्तक्रमेणैव प्रतिबन्धकं, न पृथग् ग्राह्याभावज्ञानत्वेन । अन्यत्र क्लृप्तप्रतिबन्धकत्वातिक्रमे बीजाभावात् । अत एव चात्यन्ताभावगर्भव्याप्तौ नान्योन्याभावगर्भव्यभिचारज्ञानं साक्षात्प्रतिबन्धकं, किन्त्वत्यन्ताभावगर्भव्यभिचारज्ञानद्वारेत्यग्रे वक्ष्यते ।

ननु व्यभिचारज्ञानाभावो भवतु प्रतिबन्धकाभावत्वेन व्याप्तिग्रहहेतुः । सहचारधीस्तु कुतः । व्याप्तौ सहचारस्य विशेष्यतया तत्सन्निकर्षस्यैव हेतुत्वात् । अन्तरा तज्ज्ञानकल्पने मानाभावात् । अन्यथा सर्वत्र विशेष्यज्ञानहेतुताप्रसक्तावपसिद्धान्तापातात् । न च व्याप्तिविशेषणकप्रत्यक्षे विशेषणज्ञानतया सहचारधीर्हेतुः, तथापि व्याप्तिप्रत्यक्षत्वावच्छेदेन तद्धेतुत्वासिद्धेः । तद्विशेष्यकप्रत्यक्षे अहेतुत्वात्, सहचारज्ञानत्वेन हेतुत्वालाभाच्च । अन्यथा व्यभिचारग्रहस्यापि विशेषणज्ञानतया हेतुत्वे कुतो विशेषाभिधानं सहचारधीर्हेतुरिति । सिद्धं चैतद् विशिष्टधीर्विशेषणधीजन्येति । तथा च साधनानर्थक्यम् । न च व्यतिरेकसहचारस्यान्वयव्याप्तिनिश्चायकतया न विशेषणधीत्वेन तस्य हेतुता, किन्तु सहचारज्ञानत्वेनैवेति वाच्यम् । सहचारधीहेतुत्वसिद्धौ व्यतिरेकसहचारस्यान्वयव्याप्तिनिश्चायकता कल्प्या । तस्यैवाद्याप्यासिद्धेरसिद्धमासिद्धेनेति न्यायापातात् । किञ्च, सहचारज्ञानस्य हेतुता न सहचारज्ञानत्वेन, अतिप्रसङ्गात् । नापि स्वसहचारज्ञानत्वेन, व्यतिरेक्यव्याप्तेः । न च व्यभिचारज्ञानविरोधित्वेन स्वस्वाभावसहचारज्ञानानुगमः, अन्वयसहचारज्ञानस्य व्यभिचारघटकसाध्याभावधीविघटकत्वेन व्यतिरेकसहचारज्ञानस्यापि व्यभिचारघटकहेतुज्ञानविरोधितया व्यभिचारधीविरोधि(त्वा)दिति वाच्यम् । सहचारग्रहेऽप्यधिकरणान्तरे व्यभिचारज्ञानेन तस्य व्यभिचारज्ञानविरोधित्वाभावात् । न च तदधिकरणनिष्ठव्यभिचारज्ञानाविरोधित्वं विवक्षितमिति वाच्यम् । तथा सति वह्निघटसहचारज्ञानस्यापि धूमवह्निव्याप्तिग्राहकतापत्तेः । तस्यापि वह्न्यभावघटितव्यभिचारधीविरोधित्वात् । एवं रासभधूमाभावसहचारज्ञानस्यापि धूमज्ञानविरोधित्वेन तद्व्यभिचारज्ञानविरोधित्वेन धूमवह्निव्याप्तिग्राहकतापात इति । अपि च, व्यभिचारज्ञानविरहसहकृतसहचारधीरनुमितावेव तद्धेतोरिति न्यायाद्धेतुरस्तु । किमन्तरा व्याप्तिग्रहणेनेत्यलं विस्तरेणेति ।

अत्र पक्षधरमिश्राः — विरुद्धे सहचारभ्रमाद् व्याप्तिभ्रम इत्यनुभवसिद्धम् ।

तथा च यद्विशेषयोरिति न्यायेन सहचारज्ञानमात्रस्य व्याप्तिप्रत्यक्षहेतुता कल्प्यते । यच्च तद्धेतोरिति न्यायाद् व्यभिचारधीविरहसहकृतसहचारधीरनुमितावेव हेतुरस्त्वित्युक्तं, तदपि न । अनुमितौ व्याप्तिज्ञानस्याहेतुत्वे व्यभिचारज्ञानप्रतिबन्धकत्वस्यैवासिद्धेः । ग्राह्याभावानवगाहिज्ञानस्य जनकधीविघट(क?)नद्वारैव प्रतिबन्धकत्वादिति वदन्ति ।

अत्र शङ्क्यते—व्याप्तिभ्रम एव सहचारभ्रमो न त्वनयोर्हेतुहेतुमद्भावोऽस्ति, मानाभावात् । अपि च, व्यभिचारिणि सहचारभ्रमं विनापि व्याप्तिभ्रमदर्शनाद् न तद्भ्रमो व्याप्तिभ्रमहेतुः । यच्च व्यभिचारधीप्रतिबन्धकत्वान्यथानुपपत्त्या व्याप्तिधीहेतुत्वमवादि, तदप्यसारम् । साक्षादप्रतिबन्धकेन प्रतिबन्धकरणे जनकज्ञानविघटनापेक्षणात् । व्यभिचारधियस्तु साक्षादेव प्रतिबन्धकत्वात् । न च ग्राह्याभावाविषयकतया प्रतिबन्धकस्य जनकधीविघटकत्वमिति नियम इति वाच्यम् । तथा सति शाब्दबोधे असाधुत्वधीः प्रतिब(न्धकी ? न्धिका) न स्यात् । साधुत्वज्ञानस्य तत्राहेतुत्वेन जनकज्ञानविघटकत्वाभावादिति ।

अत्र नव्याः—भ्रमो दोषजन्यः । स च सति सम्भवे अनुगत एव कल्प्यो बाधकाभावात् । तथा च विरुद्धस्थलीयव्याप्तिभ्रमत्वावच्छेदेन सहचारभ्रमस्य दोषतया हेतुत्वं सिद्धम् । यद्विशेषयोरिति न्यायेन व्याप्तिप्रत्यक्षत्वावच्छेदेन सहचारज्ञानत्वेन हेतुत्वं कल्प्यते । न च सहचारभ्रमजनक एव तत्र दोषोऽस्तु, आवश्यकत्वादिति वाच्यम् । तस्याननुगमात् । सहचारभ्रमजनकत्वेन चानुगमे लाघवाद् धर्मिधीवत् सहचारभ्रमस्यैव हेतुत्वौचित्यादिति समादधते ।

नन्विदमप्यसत् । साधारणस्थले व्याप्तिभ्रमं प्रत्यव्यभिचारभ्रमस्य प्रयोजकत्वावश्यकत्वेन व्याप्तिभ्रमत्वावच्छेदेन तस्य दोषता कल्प्यतां, तत एव विरुद्धस्थलीयव्याप्तिभ्रमस्याप्युपपत्तौ तदवच्छेदेन सहचारभ्रमरूपदोषान्तरकल्पनायां मानाभावादिति ।

अत्र ब्रूमः—आकाशादाववृत्तिपदार्थे अव्यभिचारभ्रमं विनापि व्याप्तिभ्रमदर्शनाद् विरुद्धस्थलीयव्याप्तेर्भ्रमत्वमेव सहचारभ्रमजन्यतावच्छेदकं कल्प्यते । न च तत्राप्यव्यभिचारभ्रम एव प्रयोजकोऽस्तु । प्रतियोग्यधिकरणानधिकरणहेतुसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्याव्यभिचारस्यावृत्तिपदार्थे सत्त्वेन तद्भ्रमाभावाद्, अवृत्त्यभावस्य प्रतियोग्यधिकरणाप्रसिद्ध्या तादृशाभावाप्रतियोगित्व-

स्याकाशादौ सत्त्वात् । यद्वा साध्यसामानाधिकरण्यावच्छेदकरूपत्वलक्षणव्याप्ति-ज्ञानहेतुत्वाभिप्रायकः सहचारधीहेतुताप्रवादः । तज्ज्ञाने सहचारस्य विशेषणत्व-नियमेन विशेषणज्ञानतया तद्धेतुत्वात् ।

अन्ये तु — अव्यभिचरितसामानाधिकरण्यव्याप्तिपक्षेऽपि सामानाधिकर-ण्यस्य व्यधिकरणवह्निधूमयोरभावेन सामानाधिकरण्याश्रयवृत्तिधर्मत्वमर्थो वाच्यः । तज्ज्ञाने च सामानाधिकरण्यज्ञानस्य विशेषणज्ञानतानैयत्येन हेतुत्वमित्याहुः । यत्तु भूयस्सहचारज्ञानमुत्सर्गविधया व्याप्तिग्राहकं, भूयः सहचरितस्य औत्सर्गिकव्या-प्तियोगादिति । तन्न । उत्सर्गस्य बाधकैकापोद्यनियमरूपतया नियमस्य च व्या-प्तिरूपतया ग्रहीतुमशक्यत्वात् । तस्यैव प्रकृते चिन्त्यमानत्वादिति न किञ्चिदेतत् । असाधुत्वज्ञानस्य शाब्दज्ञान इव व्यभिचारज्ञानस्याप्युनुमितौ साक्षात्प्रतिबन्धक-त्वमस्तु, किं व्याप्तिधीहेतुतयेतीदन्त्ववशिष्यते ।

अत्रोच्यते — व्याकरणव्युत्पाद्यत्वस्य साधुत्वस्य ज्ञानं न शाब्दज्ञानहेतुः सम्भवति, व्याकरणाप्रतिसन्धानदशायामपि शाब्दबोधात् । तथा च तत्रागत्या-साधुत्वज्ञानस्य साक्षात्प्रतिबन्धकता । तदभावस्य हेतुता दृष्टचरी कल्प्यताम् । इह तु व्यभिचारज्ञानस्य ग्राह्याभावावगाहितया अन्यत्र क्लृप्तप्रतिबन्धकतयैवोप-पत्तावदृष्टचरप्रतिबन्धकतायां मानाभावेन व्याप्तिधीविघटकतयैव प्रतिबन्धकत्वक-ल्पनात् । किञ्च, परामर्शानन्तरजातव्यभिचारज्ञानेऽप्यनुमित्यप्रतिबन्धेन न तत्र तस्य साक्षात्प्रतिबन्धकता । न च परामर्शानन्तरं व्यभिचारज्ञानासम्भवः । ग्राह्याभावा-वगाहिप्रत्यक्षस्यैव ग्राह्यप्रत्यक्षप्रतिबन्धकतया शाब्दादिपरामर्शनन्तरं प्रात्यक्षिक-व्यभिचारज्ञाने बाधकाभावात् । अपि चानुमितौ व्यभिचारज्ञानाभावो हेतुरव्यभि-चारज्ञानं वेति विचारे लाघवादव्यभिचारज्ञानमेव हेतुतया कल्प्यते । अन्यथायो-ग्यताज्ञानाभावस्य शाब्दबुद्धौ, प्रवृत्तौ च बलवदनिष्टाजनकताज्ञानाभावस्य हेतु-त्वापत्तौ बहुविप्लवः प्रसज्येतेति । यच्च तदधिकरणनिष्ठव्यभिचारज्ञानविरोधिसह-चारज्ञानत्वेन हेतुतायामतिप्रसक्तमभ्यधायि, तदबोधात् । तदधिकरणपदेन व्य-भिचारप्रयोजकसाध्याभावहेतुरूपदलद्वयान्यतरवत्तयोपस्थिताधिकरणस्य विवक्षित-त्वात् । तथा च घटवह्निसहचारग्रहकाले घटधूमाभावसहचारग्रहस्थले वा धूमव-त्तया वह्न्यभाववत्तया वाधिकरणोपस्थितौ व्यभिचारधीविरहे च भवत्येव व्याप्ति-ग्रह इति न काप्यनुपपत्तिः ।

केचित्तु — सहचारधीत्वेनैव व्याप्तिग्राहकता । तस्याश्च व्यभिचारधीविरहो द्वारम् । तेन सा यत्र व्यभिचारधियं प्रतिबध्नाति तत्र व्याप्तिग्रहं जनयति । अत एव व्यभिचारधीविरहसहकाले तथोक्तद्वारिणो द्वारसाहित्येनैव फलजनकत्वादित्यवोच(त् ? न्)। तच्चिन्त्यम् । सहचारज्ञानस्य तदधिकरण एव व्यभिचारधीविरोधित्वात्, व्यभिचारधीविरहस्य च सकलाधिकरणीयस्य व्याप्तिबुद्धिहेतुतया अतद्वारत्वात् । तस्मात् सहचारज्ञानं व्यभिचारप्रयोजकरूपवत्त्वोपस्थिताधिकरणनिष्ठव्यभिचारज्ञानविरोधिसहचारज्ञानत्वेन व्याप्तिधीहेतुः । सकलाधिकरणीयव्यभिचारधीविरहश्च तत्सहकारीत्येव तत्त्वम् ।

स्यादेतत् । व्याप्तेः प्रत्यक्षत्वे सर्वमिदं सङ्गच्छते । तदेव तु नास्ति । साधनवन्निष्ठाभावप्रतियोगिसामान्यान्योन्याभावस्य योग्यायोग्यप्रतियोगित्वेन योग्यानुपलब्ध्यग्राह्यत्वादिति । मैवम् । अयोग्यप्रतियोगिकाभावस्यापि योग्यप्रतियोगितावच्छेदकरूपेण प्रत्यक्षत्वात्, तेन रूपेणापादनसम्भवात् । प्रकृतेऽपि तादृशाभावप्रतियोगित्वस्य प्रतियोगितावच्छेदकस्य योग्यत्वात् । अत एव घटादावितरभेदः प्रत्यक्ष इति वक्ष्यति मणिकारः । यदि च तादृशप्रतियोगित्वाभाव एव व्याप्तिप्रविष्टः, तदा प्रतियोगिनस्तस्य योग्यत्वादनुपपत्तिरेव नास्ति । यत्तु — व्याप्तेरयोग्यत्वेऽप्युपनीतप्रत्यक्षत्वं सम्भवत्येव । न चोपनयोऽप्यनुमानेनैव, प्रत्यक्षासम्भवात् । तथा च व्याप्तिबुद्धावुपनयापेक्षायामनवस्थेति वाच्यम् । अन्यथानुपपत्त्या जन्मान्तरीयसंस्कारोपनीतव्याप्तिग्रहस्य क्वचिद्भावेन तद्विरमादिति गौडैर्दूषितम् । तन्न । उक्तक्रमेण व्याप्तेर्लौकिकप्रत्यक्षस्यैवोपपत्तावुपनीतभानानुरोधेन जन्मान्तरीयसंस्कारानपेक्षणात् । तस्य जीवनान्यथानुपपत्तिकल्प्यत्वादिति ।

ननु तर्का(व्य ? द्व्य)भिचारशङ्कापाकरणे व्याप्तिग्रह इति अनुपपन्नं, तर्कस्यापि व्याप्तिग्रहमूलत्वेनानवस्थाप्रसङ्गात् । न चोक्तं क्वचिद्व्यभिचारशङ्काविरहः स्वतः सिद्ध एव, कोट्याद्युपस्थित्यभावेनापि संशयाभावादिति नानवस्थेति वाच्यम् । कोट्युपस्थितिविरहे हेतुमन्निष्ठाभावाप्रतियोगि(क ? )त्वस्याप्यग्रहप्रसङ्गाद् व्याप्तिग्रहस्यानुपपत्तेरिति चेद्, न । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नोपस्थितौ तद्भिन्नत्वस्य पूर्वाज्ञातस्यापि भानसम्भवेन व्याप्तिग्रहसम्भवात् । संशयस्य कोटिद्वयोपस्थि[1]तिसाध्यतया व्यभिचाराव्यभिचारकोट्युपस्थितिं विना-

---

१. 'तिव्यभिचारसाध्यतयाव्यभिचारको' क. पाठः.

सम्भवात् । क्वचित् तद्व्यभिचारशङ्कावारणार्थं तर्कापेक्षायामपि सर्वत्र तदपेक्षा नास्तीति नानवस्था । ननु स्वस्य कोट्यस्मृत्यादिना शङ्काविरहादस्तु व्याप्तिग्रहः । यस्त्वनुमानप्रामाण्यप्रतिकूलश्चार्वाको ममावश्यं व्यभिचारशङ्कास्तीति न व्याप्तिग्रह इत्यनुमानं न प्रमाणमेवेति ब्रूते, तं प्रति किमुत्तरमिति चेद्, न । धूमवह्न्योः कार्यकारणभाव(ग्रा ? ग्र)हस्यैव शङ्कापनायकत्वात् । न च शङ्कायां कार्यकारणभावोऽपि दुर्ग्रहः । तत्रानन्यथासिद्धान्वयव्यतिरेकसहकृतप्रत्यक्षस्य ग्राहकत्वात्, तस्य च तर्कविशेषसहकारेण निर्णायकतया शङ्कानवकाशात् । स च तर्कः धूमो यदि वह्न्यसमवहितसामग्र्यजन्यत्वे सति वह्निसमवहितसामग्र्यजन्यः स्याद्, नोत्पन्नः स्याद् आकाशवदिति मणौ व्यक्तम् । अत्र च विपर्ययापर्यवसानमनाशङ्क्यं, प्रत्यक्षसहकारित्वादस्य । अनुमानसहकारिण एव तर्कस्य तदपेक्षणात् । वह्न्यसमवहितसामग्र्यजन्यत्वं पक्षविशेषणमित्यपि केचित् । अत्र तर्के उत्पन्नत्वस्य सुदृढप्रमाणावधृततया इष्टापत्तिशङ्का नास्त्येव । वह्न्यसमवहितसामग्र्यजन्यत्वासिद्धिमूलशैथिल्ययोः सम्भावना परैर्वाच्या । सापि तव नास्तीति परं प्रति वाच्यम् । तत्र चेत् परो ब्रूयाद् अस्त्येव मम शङ्केति, तदा तं प्रति व्याघातो देयः । तथा सति (नियमतो ?) धूमार्थं वह्नेः, परप्रतिपत्त्यर्थं शब्दस्य, तृप्त्यर्थं भोजनस्योपादानं नियमतो न स्यात् । नहि यद्व्यतिरेकेण यत् सम्भाव्यते तदर्थं नियमात् तदुपादीयेतेति । तथा च नियतं तदुपादानमेव तादृशशङ्कापिशाच्युत्थानप्रतिबन्धकमिति परार्थानुमानमपि सम्भवति । एतदभिप्रायक एव 'उपादानं शङ्काप्रतिबन्धकमि'ति मणिरिति विभावनीयम् । यत्तु — स्वार्थानुमान एवोपादानं शङ्काप्रतिबन्धकमित्यभिप्रायको मणिः । न चोपादानं यतो न शङ्काप्रतिबन्धकः, विरोधिनिश्चयस्यैव तत्प्रतिबन्धकत्वाद्, उपादानजनकीभूतहेतुताग्रहस्य चोपादानपदार्थत्वे अन्योन्याश्रयः, शङ्काप्रतिबन्धे हेतुताग्रहात् तेन च शङ्काप्रतिबन्धादिति वाच्यम् । उपादानपदेन वह्न्यसमवहितानुपादानप्रयोजकवह्न्यसमवहिताजन्यत्वज्ञानस्य विवक्षितत्वादिति । तन्न । वह्न्यसमवहिताजन्यत्वज्ञानाद् वह्न्यसमवहितजन्यत्वशङ्काव्युदासेऽपि अहेतुक(त्व)शङ्काया अप्रतिबन्धात् । न च वह्न्यसमवहिताजन्यत्वधीः कार्यं सहेतुकमित्यनुमितिसहाया सर्वशङ्कापनायिकेति वाच्यम् । तस्या अनुमितेर्व्याप्तिग्रहमूलकतयानवस्थानात् । शङ्काव्युदासस्य तत एव भावे तर्कानर्थक्यापत्तेश्च ।

केचित्तु — उपादानप्रयोजकीभूतान्वयव्यतिरेकशालित्वज्ञानमेव शङ्काप्रतिबन्धकत्वेन विवक्षितम्। यद्धर्मावच्छेदेन यद्धर्मावधारणं तद्धर्मावधारणस्य तत्र तच्छङ्काप्रतिबन्धकत्वात्। धूमत्वावच्छेदेन वह्निव्याप्त्यवगमाद् धूमत्वज्ञानस्यैव वह्निव्याप्तिसंशये तथा(च?)वह्न्यन्वयव्यतिरेकशालित्वावच्छेदेन वह्निजन्यत्वावधारणात् तज्ज्ञानस्य (च) तत्संश(य?ये) विरोधित्वम्। न चैवं तर्को व्यर्थः, शङ्काप्रतिबन्धस्य तत्फलस्यान्वयादिज्ञानादेव सिद्धेरिति वाच्यम्। तर्कस्यैवान्वयादिज्ञानरूपत्वात्। वह्न्यसमवहितसामग्र्यजन्यत्वे सतीत्यनेन व्यतिरेकस्य, वह्निसमवहितसामग्र्यजन्यत्वेनार्थादन्वयस्य विषयीकरणात्। यदभावे यदभावः, तद्भावेऽपि तदभावे तदनुत्पादप्रसङ्गात्। तथा च तर्कतयान्वयादिज्ञानतया च स एव शङ्काप्रतिबन्धक इति न व्यर्थ इत्याहुः।

अत्रेदं चिन्त्यम् — अन्वयादिकं नियतं शङ्काप्रतिबन्धकमनियतं वा। नाद्यः। सहचारदर्शनस्य नियतान्वयव्यतिरेकज्ञानरूपत्वाभावे तदसिद्धेः। नान्त्यः। व्यभिचारिसाधारणतया शङ्का(यां?याम)प्रतिबन्धकत्वात्। अत एव नान्वयाद्यनुविधायित्वज्ञानमवच्छेदकधर्मज्ञानत्वेन शङ्कापनायकम्। अन्वयाद्यनुविधायित्वज्ञानस्य व्यभिचार्यन्यथासिद्धसाधारणतयावच्छेदकधर्मत्वाभावात्। न चावच्छेदकधर्मत्वाभावेऽपि तत्त्वेन ज्ञानात् शङ्काप्रतिबन्धो भूयादेव, तावतैव तर्कस्य सार्थक्यमिति वाच्यम्। भ्रमरूपावच्छेदकत्वज्ञानस्य विवक्षितत्व एतावत्प्रयासवैफल्यात्। भ्रमेण यत्किञ्चिद्धर्मस्यैवावच्छेदकत्वग्रहसम्भवात्। किं बहुना, तर्कस्यान्वयविषयत्वमेव नास्ति। यदभावे यदभावस्तद्भावेऽपि तदभावे तन्नोत्पद्येतेत्यस्य व्याप्त्यन्तरत्वात्।

नव्यास्तु — अन्वयाद्यनुविधायित्वज्ञानं तर्कमूलभूतं तर्कभिन्नमेव शङ्काप्रतिबन्धकम्। तथा च तर्कस्यान्वयादिविषयत्वाभावेऽपि न क्षतिः। न चैवं शङ्काप्रतिबन्धस्य तर्कप्रयोजनस्यान्वयादिज्ञानादेव सिद्धेः किं तर्केणेति वाच्यम्। तर्कस्यानिष्टप्रसञ्जनात्मकस्य शङ्काजन्यविरोधिजिज्ञासानिवारकत्वेन सार्थत्वादिति वदन्ति। तन्न। अन्वयादिज्ञानस्य व्यभिचार्यादिसाधारण्येन शङ्कानपनायकत्वादित्युक्तत्वात्। शङ्कापनायकत्वे च शङ्काविरहादेव जिज्ञासानुत्पादे तर्कवैफल्यात्, पूर्वजिज्ञासानाशस्य च विरोधिगुणमात्रसाध्यत्वादिति। तस्मात् स्वार्थस्थले कोट्यनुपस्थित्यादेरेव शङ्कानवश्यंभाव इति परार्थस्थल एवोपादानं शङ्कोत्था(प?)नप्रतिबन्धकमिति दिक्।

ननु व्याप्तेरत्यन्तान्योन्याभावादिगर्भतया कथं तज्ज्ञानमनुमितिहेतुः, परस्परव्यभिचारादिति चेद्, अन्योन्याभावगर्भव्याप्तिज्ञानस्य लाघवेनानुमितिहेतुत्वादिति मणिकृतः।

अत्र केचिद् — अत्यन्ताभावस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यारोपपूर्वकधीविषयत्वम्, अन्योन्याभावस्य तु प्रतियोगितावच्छेदकारोपपूर्वकधीविषयत्वमात्रमिति शीघ्रोपस्थितिकत्वमेवात्र विवक्षितम्। न च ग्राहकलाघवं न विनिगमकं, किन्तु ग्राह्यलाघवमेवेति वाच्यम्। ग्राह्ययोरत्यन्तान्योन्याभावगर्भयोः साम्ये विनिगमकचिन्तायामन्योन्याभावगर्भायां ग्रा(ह्य ? ह)कलाघवस्य विनिगमकत्वसम्भवादिति मणिकृतोऽभिसन्धिं वर्णयाञ्चक्रिरे। तदमञ्जुलम्। तदभावज्ञानत्वावच्छेदेनैव तदारोपस्य लाघवाद्धेतुतयात्यन्ताभावज्ञानवदन्योन्याभावज्ञानस्यापि प्रतियोग्यारोपजन्यत्वाद्, उक्तविनिगमकस्यासम्भवात्। इयांस्तु विशेषः, यदेकत्र संसर्गावच्छिन्नप्रतियोग्यारोपः कारणमपरत्र तादात्म्यावच्छिन्नतदारोप इति। (यत्किञ्चिदेतत् ?।) प्रतियोग्यसामानाधिकरण्यांशस्यान्योन्याभावगर्भायामप्रवेशेनात्यन्ताभावगर्भव्याप्त्यपेक्षया लाघवमित्यन्ये। तदप्यभद्रम्। अन्योन्याभावोऽव्याप्यवृत्तिरिति भ्रमदशायामव्याप्यवृत्तिव्याप्तिज्ञानानुपपत्त्या प्रतियोगितावच्छेदकसमानाधिकरणत्वेनाज्ञायमानत्वस्यात्रापि देयत्वात्। तादृशो भ्रम एव न सम्भवतीति तु साहसम्। भ्रमस्य विशेषादर्शनसमुत्थस्य निवर्तयितुमशक्यत्वात्। किं बहुना, प्रतियोग्यसामानाधिकरण्याज्ञानदशायां धूमसमानाधिकरणाभावाप्रतियोगी वह्निरिति व्याप्तिघटकाविशिष्टपदार्थमानेनानुमित्यभावापत्त्यानुभवविरोधात् तदंशज्ञानमनुपयुक्तमेव वाच्यम्। तथा च स्वरूपसत्या व्याप्तेरनुमित्यजनकतया ज्ञेयांशस्यात्यन्तान्योन्याभावगर्भयोः साम्येन विनिगमनायाः कर्तुमशक्यत्वाद् नान्योन्याभावगर्भव्याप्तिज्ञानमात्रस्य हेतुता। अत एवान्योन्याभावगर्भायां प्रतियोगिवृत्तित्वेनाज्ञायमानत्वं विशेषणम्, अत्यन्ताभावगर्भायां च प्रतियोग्यधिकरणवृत्तित्वेनाज्ञायमानत्वं विशेषणमिति पूर्वस्य लघुत्वमिति गौडानां कल्पितं परास्तम्। ज्ञेयभागस्य साम्येनोक्तस्यानियामकत्वात्।

पक्षधरमिश्रास्तु — विनिगमनाविरहात् सर्वस्या अपि व्याप्तेः ज्ञानमनुमितिहेतुः, ग्रन्थस्तूपलक्षणपरः। न च परस्परव्यभिचारः। तत्तदनुमितिविशेषे

१. 'यां प्र' क. पाठः.

तत्तद्व्याप्तिज्ञानस्य हेतुत्वात् । न चैवमनुमितित्वावच्छिन्ने अनुगतहेत्वलाभः । व्यभिचारधीविरहसहकृतसहचारधिय एव तत्रानुगतहेतोः सत्त्वात् । यद्वा, अन्योन्याभावगर्भैवेत्यस्यान्योन्यं साध्यसाधने अभावश्च इत्येतन्मात्रगर्भव्याप्तिः प्रयोजिकेत्यर्थः । तेनानौपाधिकत्वे उपाधेरधिकस्य प्रवेशात् तदेव व्यवच्छेद्यम् । अत्यन्तान्योन्याभावगर्भाः सर्वा अपि संग्राह्या एव । न चैवमननुगमः । व्यभिचारज्ञानविरोधिव्याप्तिज्ञानत्वेन सर्वानुगमात् । अथवा शीघ्रोपस्थितिकत्वाद् अन्योन्याभावगर्भैव प्रयोजिका । हेतुसमानाधिकरणान्योन्याभावप्रतियोगिनोः साध्यसाधनयोरवश्योपस्थित्या तादृशात्यन्ताभावप्रतियोगिनश्च उपस्थित्यनियमेनात्यन्ताभावज्ञानापेक्षयान्योन्याभावज्ञानस्य प्रतियोगिज्ञानसत्त्वेन शीघ्रोत्पत्तिकत्वात् । हेतुसमानाधिकरणात्यन्ताभावप्रतियोगिनोः साध्यतावच्छेदकहेतुतावच्छेदकयोरुपस्थितिनियमेऽपि अत्यन्ताभावग्रहप्रयोजकप्रतियोगितावच्छेदकविशिष्टतयोपस्थित्यनियमात् । अधिकरणस्याधिकरणतावच्छेदकविशिष्टस्योपस्थितावपि तन्निष्ठात्यन्ताभावप्रतियोगित्वानियमेन व्याप्तिग्रहानुपयोगात् । केवलान्वय्यधिकरणकव्याप्तिग्रहे स्वस्य स्ववृत्तितया स्वनिष्ठात्यन्ताभावाप्रतियोगित्वात् । तथा च शीघ्रोपस्थितिलाघवेनान्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुरिति यथाश्रुत एव मणिः साधीयान् । वस्तुतस्तु व्याप्तेर्भेद एव न । हेतुसमानाधिकरणधर्माविरोधिसाध्यसामानाधिकरण्यस्य व्याप्तित्वात् । हेतुसमानाधिकरणधर्मश्च व्यभिचारिणि साध्यात्यन्ताभावस्तद्वदन्योन्याभावश्चेत्यत्यन्तान्योन्याभावगर्भत्वस्य व्यपदेशः । वस्तुत उक्तक्रमेणैव हेतुत्वमिति न व्यभिचार इत्याहुः ।

अत्राद्यपक्षो न क्षोदक्षमः । तथाहि — व्यभिचाराननुगमात् तज्ज्ञानाभावोऽपि कथमनुगत इति दोषः प्रतिबन्धकाभावकूटस्य हेतुतया समाधीयतां तावत् । परामर्शानन्तरजातव्यभिचारज्ञाने सत्यनुमित्यभावापत्तिः कथं समाधेया । इष्टापत्त्यैवेति चेत्, तर्हि व्यभिचारज्ञानाभावस्यैवानुमितिहेतुत्वे विशेषेऽपि तत्तद्व्याप्तिधीहेतुत्वं न स्यादिति महानिष्टापत्तिः प्रसज्येत । किं बहुना, सामान्यहेतुता लाघवात् सहचारज्ञानस्यैवास्तु, किं व्यभिचारधीविरहेणावच्छेदकेन । अतिप्रसङ्गस्तु विशेषहेतुतत्तद्व्याप्तिज्ञानेनैव वार्य इति । द्वितीयपक्षेऽपि यद्यपि व्यभिचारधीविरोधित्वम् । यत्किञ्चित्तद्विरोधित्वं, यावत्तद्विरोधित्वं वा । नाद्यः । अत्यन्ताभावगर्भव्याप्तिज्ञानस्य तद्गर्भव्यभिचारधीविरोधिनः सत्त्वेऽन्योन्याभावगर्भव्यभिचारज्ञाने सत्यनुमित्यापत्तेः । यावद्व्याप्तिज्ञानत्वेन हेतुत्वे चान्यतरव्याप्तिज्ञानसत्त्वे

अन्यतरव्यभिचारास्फूर्तावप्यनुमित्यनापत्तेः । तत्र चेष्टापत्तेरनुभवविरोधेनानुक्तिसम्भवात् । नान्त्यः । एकस्या अपि व्याप्तेर्ग्राह्याभावताविरहेण यावत्तद्विरोधित्वासम्भवादिति । तथाप्युभयव्याप्तिज्ञानेऽप्यनुमितेरनुभवसिद्धतया ग्राह्याभावानवगाहित्वेऽप्यत्यन्ताभावादिगर्भव्याप्तिज्ञानेनान्योन्याभावादिगर्भव्यभिचारधीः प्रतिरुध्यत एव, अनुभवबलात् । तथा च यावद्व्यभिचारज्ञानविरोधित्वेन उभयव्याप्त्योरनुगमः सम्भवत्येवेत्यभिसन्धिः । तृतीयपक्षस्तु न मनोज्ञः । यत्र क्वचिच्छीघ्रोपस्थितिकत्वस्यात्यन्ताभावसाधारण्यात् सर्वत्र शीघ्रोपस्थितिकत्वस्यान्योन्याभावेऽप्यभावात् सामग्रीबलेन क्वचिदत्यन्ताभावस्यैव शीघ्रोपस्थितेः । किं बहुना, सकलसाधारणी व्याप्तिरेका नास्त्येवेति प्रागुक्तमेव । तथा च धूमादिव्याप्तिज्ञानस्थलेऽन्योन्याभावप्रतियोगिनः साध्यादेरिवात्यन्ताभावप्रतियोगिनोऽधिकरणस्याप्युपस्थितत्वान्न प्रतियोग्युपस्थित्यनुपस्थितिकृतमुपस्थितिलाघवादिकामिति । चतुर्थपक्षोऽपि न रम्यः । हेतुमन्निष्ठसकलधर्माविरोधित्वं तदनधिकरणाधिकरणभिन्नत्वम् । तत्प्रकारकज्ञानस्य हेतुत्वे हेतुमन्निष्ठात्यन्ताभावाप्रतियोगित्वादिप्रकारकज्ञानादनुमितिर्न स्यात् । न स्याच्चात्यन्ताभावादिगर्भव्यभिचारधीप्रतिबन्धकता, ग्राह्याभावानवगाहित्वात् । प्रत्येकमेव तत्प्रकारकव्याप्तिज्ञानस्य हेतुत्वे चोक्तक्रमेणानुगमस्याकिञ्चित्करत्वादिति ।

नव्यास्तु — सकलव्याप्तिज्ञाने सत्यनुमितिरित्यनुभवासिद्धा । परन्तु साक्षाद् व्याप्त्यन्तरज्ञानद्वारा वेति संशये लाघवं निर्णायकम् । तच्च प्रकृतेऽन्योन्याभावगर्भायामेव । हेतुमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नसामानाधिकरण्यापेक्षया हेतुमन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकसामानाधिकरण्यस्यैकावच्छेदकशून्यतया लघुत्वात् । न च हेतुमन्निष्ठा(न्योन्या)भावप्रतियोगितावच्छेदकतया तत्तद्वह्नेः प्रसिद्धानुमानेऽव्याप्तिप्रसङ्गेन यद्रूपावच्छिन्नमन्योन्याभावप्रतियोगितानवच्छेदकमित्यर्थो वाच्यः । तथा च क्वात्यन्ताभावगर्भापेक्षया लाघवमिति वाच्यम् । हेतुमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं यद्रूपावच्छिन्नमित्यस्य तत्राप्यावश्यकत्वात् । अन्यथा दण्डिमत्त्वादिसाध्यके हेत्वधिकरणनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकता दण्डादे(र ? रित्य)व्याप्तिप्रसङ्गात् । विशेषणदाने च दण्डत्वावच्छिन्नं नावच्छेदकमिति नाव्याप्तिः । तथा चैतद्विशेषणस्योभयत्रापि साम्यमेव । अन्योन्याभावगर्भायां प्रतियोगितानवच्छेदकत्वमात्रं प्रविष्टम्, अत्यन्ताभावगर्भायामेकं तदवच्छिन्नपद-

मधिकमेवेति तदपेक्षयान्योन्याभावगर्भव्याप्तिर्लघीयसीति तज्ज्ञानमेवानुमितिहेतुरिति यथाश्रुत एव मणिर्निष्कलङ्क इति वदन्ति । वस्तुतस्तु हेतुतानिर्णयो लाघवानुरोधाद् अनुभवानुरोधाद् वा । आद्ये सामानाधिकरण्यावच्छेदकधर्मलक्षणव्याप्तिधीरेव सर्वापेक्षया लघुविषयतया हेतुः । अत एव सहचारधीर्व्याप्तिग्रहहेतुः, सहचारस्योक्त[1]व्याप्तौ विशेषणस्य नियमादिति प्रागेवावदत् । न चावच्छेदकत्वं नानतिरिक्तवृत्तितामात्रम् । नीलधूमत्वादिसाधारण्यात् । अपि तु तादृशलघुध(र्मः र्मा-)घटि(त)त्वादिघटितशरीरं वाच्यं, तथा च क्वान्यापेक्षया लाघवमिति वाच्यम् । अत्यन्ताभावादिगर्भव्याप्तावप्यवच्छेदक(त्व)स्य प्रवेशाद्, अप्रवेशेऽपि तदपेक्षया लाघवात् । उदाहरणवाक्यप्रतिपाद्यत्वं तस्यापि नास्तीत्यवच्छेदकत्वघटकधर्मावभासकाभावादित्युपाध्यायमताभेदः । अन्त्ये सर्वासां व्याप्तीनां ज्ञानमनुमितिहेतुः, अनुमितिविशेषे तत्तद्व्याप्तिर्हेतुरिति नाननुगमः, अनुमितित्वावच्छिन्ने तु लिङ्गधीः सामानाधिकरण्यधीर्वेति न *किञ्चिद्विशेषः ।

इदन्त्ववधेयम् — अत्यन्ताभावादिगर्भव्याप्तिधीर्यावद्व्यभिचारधीप्रतिबन्धिका । ग्राह्याभावावगाहनेनैव प्रतिबन्धकत्वं ज्ञानस्येति तु परिभाषामात्रं, सिद्ध्यादावनुमित्यादिप्रतिबन्धक इवेहापि फलबलेन म(ह्वा ? ण्या) दिन्यायेनान्यधियः प्रतिबन्धकताकल्पनात् । अन्यथात्यन्ताभावगर्भव्यभिचारज्ञानेऽन्योन्याभावगर्भव्याप्तिज्ञानादनुमित्यापत्तेः । (अन्यथा ?) अत्यन्ताभावगर्भव्यभिचारज्ञानादन्योन्याभावगर्भव्यभिचारानुमानाद् न तद्गर्भव्याप्तिधीरिति चेद्, न । अनुमानस्यासार्वत्रिकतया क्वचित् तथात्वापत्तेरनुत्तरीयत्वात् । ननु म(ह्वा ? ण्या)दिन्यायाज्ज्ञानस्य प्रतिबन्धकत्वे व्यभिचारधीः साक्षादेवानुमितौ प्रतिबन्धिकास्तु । तथा च तदभाव एवानुमितिहेतुरस्तु, किं व्याप्तिज्ञानहेतुत्वेनेति चेद्, न । अनुमितौ व्यभिचारज्ञानाभावापेक्षया लाघवेनाव्यभिचारज्ञानस्य हेतुत्वात् । अन्यथा शब्दबुद्धौ योग्यताज्ञानस्य, प्रवृत्तौ कृतिसाध्यताज्ञानस्य हेतुत्वं न स्यादिति संक्षेपः ।

ननु पर्वतीयधूमस्य वह्निव्याप्त्यनवगमात् कथं तस्मादनुमितिः । नह्य(न्य)त्र व्याप्तिज्ञानमन्यत्र पक्षधर्मताज्ञानं चानुमितिहेतुः, अतिप्रसङ्गादिति

1. 'क्तमहव्या' क. पाठः.

* ईषदित्यर्थः । 'कश्चिदि'ति वा पाठ्यम् ।

चेद्, अत्र प्राञ्चः—महानसीयधूमे धूमत्वदर्शनानन्तरं तयैव सामान्यप्रत्यासत्त्या धूमत्वावच्छिन्नोपस्थितौ व्याप्तिग्रहादनुमितिसम्भवात् । अन्यथा तदनुत्पादसम्भवात् । इदमेव च सामान्यस्य प्रत्यासत्तित्वकल्पकमित्याचक्षते । तदेतन्मानान्तरसिद्धायां सामान्यप्रत्यासत्तौ घटते । अन्यथा न्यायनये महानसधूमे धूमत्वपुरस्कारेण व्याप्तिग्रहे पर्वतीयधूमे धूमत्वदर्शनानन्तरमुपनीतव्याप्तिभाने बाधकाभावात् । यद्धर्मपुरस्कारेण यद्धर्मग्रहः, तद्धर्मग्रहस्यैव तत्र तदुपनायकत्वात् । परनये च समानप्रकारत्वेनैव व्याप्तिपक्षधर्मतयोर्ज्ञानस्यानुमितिहेतुत्वाद् धूमत्वप्रकारकव्याप्तिज्ञानात् तत्प्रकारकपक्षधर्मताज्ञानाच्चानुमित्युत्पत्तौ बाधकाभावात् किं सामान्यप्रत्यासत्त्येति ।

मणिकृतस्तु—सामान्यलक्षणां विना विशेषदर्शनदशायां धूमो वह्निव्यभिचारी न वेति संशयो न स्यात् । प्रसिद्धधूमे वह्निसंबन्धावगमात् । अवगते च संशयाभावात् । अन्यथातिप्रसङ्गात् । अप्रसिद्धधूमस्य चाज्ञानात् तद्धर्मिकसंशयानुत्पादाद्, धर्मिज्ञानस्य संशयहेतुत्वात् । तस्माद् धूमत्वप्रत्यासत्त्या प्रसिद्धाप्रसिद्धधूमोपस्थितौ प्रसिद्धं विहायाप्रसिद्धसंशय उत्पद्यत इत्यवश्यं सामान्यप्रत्यासत्तिरङ्गीकार्येत्याहुः ।

अत्र वदन्ति—कोटिद्वयस्मृतिर्धर्मीन्द्रियसन्निकर्षश्च संशयहेतुरस्तु, न तु धर्मिधीरपीत्यप्रसिद्धधूमस्याज्ञानेऽपि तद्धर्मिसंशये बाधकाभावः । न च तेन सहेन्द्रियसन्निकर्षाभावाज्ज्ञानमेव सन्निकर्षो वाच्यः, तदर्थमेव सामान्यप्रत्यासत्तिरङ्गीकार्येति वाच्यम् । धर्मितावच्छेदकप्रकारकज्ञानस्यैव प्रत्यासत्तित्वात्, तस्य च सामान्यलक्षणां विनापि सम्भवात् । अस्तु वा धर्मिधीः संशयहेतुः, तथापि न संशयानुपपत्तिः । तथाहि—तत्तद्धूमत्वेन निश्चितवह्निसम्बन्ध एव प्रसिद्धधूमे धूमत्वेन तत्संशये बाधकाभावात् । समानप्रकारकनिश्चयस्यैव संशयपरिपन्थित्वात् । न च समानविषयत्वेनैव संशयप्रतिबन्धकत्वं निश्चयस्येति निश्चितवह्निसम्बन्धे केनापि रूपेण न संशयः, समानप्रकारकत्वेन विरोधित्वाभ्युपगमेऽपि विशेषप्रकारकनिश्चयत्वेन सामान्यप्रकारकसंशयप्रतिबन्धकताभ्युपेयैव । अत एव इदम्पर्वतत्वेन वह्निनिश्चये पर्वतत्वेन न तत्संशय इति स्वीकृतम् । तथा च तत्तद्धूमत्वेन विशेषतो निश्चये कथं धूमत्वेन तत्संशय इति वाच्यम् । तथापि धूमत्वेन सन्दिग्धव्यक्त्यन्तरमेव संशयधर्म्यस्तु । किं बहुना, यथा प्रामाण्यसन्दे-

हाहितसंशयो निश्चिते विषये औचित्यावर्जितोऽङ्गीक्रियते, तथा प्रसिद्धधूम एव धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशयाहितव्यभिचारसंशये बाधकाभावः। कथमन्यथा सामान्यलक्षणाभ्युपगमेऽप्येतच्चन्दनखण्डप्रभवदशधूमव्यक्तिनिष्ठप्रत्ये-कतत्प्रभववह्निसम्बन्धग्रहे एतच्चन्दनखण्डजन्यधूम एतच्चन्दनखण्डवह्निव्यभिचारी न वेति संशयः। न ह्यत्रैव तत्राप्यनवगतवह्निसम्बन्धः सामान्योपस्थाप्यः कश्चिद् धर्म्यस्ति, येन तद्धर्मिकत्वं संशयस्य कल्प्यमिति।

अत्र पक्षधरमिश्राः — धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशयो न वह्निव्यभिचारित्वेनोपस्थितघटादौ धूमत्वं विषयीकरोति, तत्र धूमत्वाभावनिर्णयात्। किन्तु वह्निव्यभिचारित्वेन सामान्यप्रत्यासत्त्या प्रसिद्धाप्रसिद्धवह्निव्यभिचार्युपस्थितौ प्रसिद्धं परित्यज्याप्रसिद्धतद्वृत्तित्वं धूमत्वे विषयीकरोति। अयमपि संशयः सा-मान्यप्रत्यासत्त्यधीन एवेति सावश्यमभ्युपगन्तव्येति समादधते।

अत्रेदमालोचनीयं— दोषात् प्रसिद्ध एव क्वचिद् वह्निव्यभिचारिणि धूमत्व-व्यतिरेकानिश्चयेन सामान्यलक्षणां विनापि धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशय उपपद्यते। ततश्च तदाहित एव धूमो वह्निव्यभिचारी न वेति संशयः सम्भवत्येव। न च धूमभिन्ने धूमत्वं नास्तीति निश्चयदशायां कथं वह्निव्यभिचा-रिणि प्रसिद्धघटादौ धूमत्वसंशय इति वाच्यम्। धूमभिन्नत्वेनापि दोषाद् व्यक्ति-विशेषानुपस्थितेस्त्वयापि स्वीकार्यत्वात्। कथमन्यथा सामान्यलक्षणाङ्गीकारेऽपि चन्दनखण्डजन्यधूमाभिन्ने न तद्धूमत्वमिति निश्चये चन्दनखण्डप्रभवधूमस्तज्जन्य-वह्निव्यभिचारी न वेति संशयः।

केचित्तु — प्रसिद्धधूमेऽत्यन्ताभावादिगर्भव्याप्तिनिश्चयेऽपि साध्यसामा-नाधिकरण्यावच्छेदकधर्मवत्त्वलक्षणव्याप्तिसन्देहे बाधकाभावः। तस्यानिर्णयात्। नह्यन्यनिर्णयोऽन्यसंशयपरिपन्थीति न व्यभिचारसंशयान्यथानुपपत्तिः सामान्य-लक्षणायां मानम्। किञ्च, सम्बन्धितावच्छेदकभेदात् सम्बन्धि(क?)पदार्थभेद इति तत्तद्धूमत्वावच्छिन्नव्याप्त्यपेक्षया धूमत्वावच्छिन्नव्याप्तिर्भिन्नेति तद्धूमत्वाव-च्छिन्नव्याप्तिनिश्चयेऽपि धूमत्वावच्छिन्नव्याप्तिसंशये बाधकाभाव इति। तच्चिन्त्यम्। धूमो वह्निव्यभिचारी न वेति संशयस्य यथाकथञ्चिद् एवमुपपादनेऽपि धूमः शुक्लो न वेत्यादिसंशयस्य सामान्यलक्षणां विनासम्भवाद्, व्याप्तिभेदवत् शुक्लत्वादिभे-दाभावात्। तस्मात् प्रसिद्धधूम एव धूमत्वप्रकारकः (स्वारसि?) स्वारसिकः सं-

शय इति वा, अन्याहितसंशय इति वा, घटादावेव धूमत्वादिरूपेण तद्धर्मिकसंशय इति वा, प्रसिद्धधूम एव क्वचिद् धूमत्वादर्शनाद् वह्निसामानाधिकरण्यादर्शनाद् वा संशय इति कल्प्यतां, किं सामान्यप्रत्यासत्त्येत्येव तत्र दूषणम् ।

पक्षधरमिश्रास्तु — सामान्यलक्षणां विनान्धकारप्रत्ययो न स्यात्, तस्य यावदुद्भूतरूपतेजस्संसर्गाभावरूपस्य प्रतियोगिरूपयावत्तेजोज्ञानाधीनत्वात्, तस्य च तया विना असम्भवाद्, अतीतानागततेजसां सन्निकर्षान्तराभावादिति । किञ्च, ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहार्थमपि सामान्यलक्षणाभ्युपेया । अन्यथा कृतिकालोत्तरं ज्ञानस्याभावात् तद्धेतुताग्रहानुपपत्तेः । न च स्मृत्युपनीते ज्ञाने कृतिहेतुताग्रहो मनसेति वाच्यम् । स्मृतेरनुभवपूर्वकत्वाद्, अनुभवस्य च कृतिजनकीभूतज्ञानानन्तरमुत्पादाङ्गीकारे कृतिकाले जनकीभूतज्ञानाभावेन कृतिरेव नोत्पद्येत, किंहेतुता तत्र (ग्रा?गृ)ह्येत । सामान्यप्रत्यासत्त्यङ्गीकारे चायं घट इति ज्ञानानन्तरं तदनुव्यवसायगृहीतघटविषयकज्ञानत्वप्रत्यासत्त्या सकलघटविषयकज्ञाना(भा?नुभ)वे जाते पुनर्घटविषयक(इति?)ज्ञानादिच्छाकृती भवतः । तदनन्तरं पूर्वानुभवाद् घटविषयकज्ञानस्मृतिः, तदुपनीते तत्र मनसा कार्यकारणभावपरिच्छेद इत्याहुः ।

तदपि परं प्रति न प्रमाणीकर्तुं शक्यम् । विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्याभावज्ञाने प्रतियोगितावच्छेदकप्रकारकज्ञानस्य फलीभूतज्ञानप्रकारप्रकारकज्ञानस्य वा हेतुत्वाभ्युपगमात् । तच्च तेजस्त्वमिति तत्प्रकारकज्ञानं सामान्यलक्षणां विनापि सम्भवतीति किं सामान्यलक्षणया । यदपि ज्ञानप्रयत्नयोः कार्यकारणभावग्रहार्थं सामान्यलक्षणाङ्गीकार इत्युक्तं, तदप्यकोमलम् । अयं घट इति ज्ञानानन्तरमेतदनुव्यवसायेन घटविषयकज्ञानत्वविशिष्टलज्ज्ञानं, ततः प्रवर्तकीभूतज्ञानोत्पादादिच्छाद्युत्पादः, तदनन्तरं घटविषयकज्ञानत्वप्रकारकपूर्वानुभवजनितघटविषयकज्ञानत्वप्रकारकस्मृत्योपनीते ज्ञाने घटविषयकज्ञानं घटविषयककृतिहेतुरिति ग्रहः सम्भवत्येव, समानप्रकारकानुभवस्य तत्प्रकारकस्मृतिहेतुत्वादिति किं सामान्यलक्षणया । किञ्च, ज्ञानं तदनुव्यवसायः, ततो विनश्यदवस्थज्ञानादिच्छा, तज्ज्ञानतत्संस्कारयोस्तृतीयक्षणे उत्पत्तिः, ततः कृतिः, ततस्तदनुव्यवसायानुभूतज्ञानस्मृतिः, ततः स्मृत्युपनीते ज्ञाने कृतिहेतुताग्रहः सम्भवत्येव । न चैवं कृत्युत्पत्तिरेव न स्यात्, कृतिपूर्वक्षणे ज्ञानस्याभावा-

दिति वाच्यम्। ज्ञानस्याभावेऽपीच्छारूपतद्व्यापारसत्त्वेन कृत्युत्पत्तिसम्भवादिति यत्किञ्चिदेतत्।

साम्प्रदायिकास्तु—सामान्यलक्षणां विना सुखादाविच्छा, पाकादौ च चिकीर्षा न स्यात्। इच्छायाः समानविषयकज्ञानसाध्यत्वात्, सिद्धस्येच्छाविषयत्वाभावाद्, असिद्धस्य चाज्ञानादित्यसिद्धज्ञानार्थं सामान्यलक्षणाङ्गीकार्येति वदन्ति।

तदपि परो न क्षमते। तेन ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुत्वाङ्गीकारात्। सिद्धपाक एव पाकत्वादिप्रकारकज्ञानात् पाकत्वादिप्रकारकेच्छाया इच्छास्वाभाव्यादसिद्धविषयिण्या उत्पादसम्भवेनासिद्धविषयकज्ञानोत्पादार्थं सामान्यलक्षणाङ्गीकारस्य व्यर्थत्वात्। किं बहुना, समानप्रकारकसिद्धेरेवेच्छोत्पत्तिविरोधितया तत्तत्सुखत्वादिप्रकारकसिद्धावपि सुखत्वादिनासिद्धसुखादावेवेच्छोत्पत्तौ बाधकाभावात्। किञ्च, पाकत्वं सुखत्वाव्यावृत्तवर्तमानपाकसुखातिरिक्तवृत्ति जातित्वाद् घटत्वादिवदित्यनुमानेनानागतज्ञानं सम्भवत्येव। अत एव कृत्यनन्तरभविष्यत्त्वरूपकृतिसाध्यताज्ञानं प्रवृत्तिहेतुः, तच्चासिद्ध एवेति तज्ज्ञानार्थं सामान्यप्रत्यासत्तिः कल्पनीयेत्यपास्तम्। पाको मत्कृतिसाध्य इत्याद्यनुमानेनानागतपाकज्ञानस्य शब्दखण्डे वक्ष्यमाणत्वादित्यविचारितरमणीयमेव सामान्यप्रत्यासत्तिकल्पनमिति।

अत्र प्रतिभाति। प्रसिद्धाङ्गकमेव प्रमाणमिति न नियमः। (अ)प्रसिद्धाङ्गकस्यापि प्रमाणत्वसम्भवात्। तथा च प्रतियोगिज्ञानस्याभावज्ञानहेतुतयान्धकारप्रत्ययस्य सामान्यलक्षणां विनासम्भव एव। यावदुद्भूतरूपतेजोज्ञानस्य प्रकारान्तरेणासम्भवात्। एवञ्च विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वानुरोधेनापि सामान्यलक्षणाङ्गीकार्या। अन्यथा पर्वतो वह्निमानित्यनुमितेरनुत्पादप्रसङ्गात्। पर्वतीयवह्नेर्विशेषणस्य प्रागज्ञानाद्, वह्नित्वरूपसामान्यप्रत्यासत्तिं विना तज्ज्ञानोपायस्याभावात्। न चानुमानात् तद्वह्निधीः। तथा सत्यनवस्थाप्रसङ्गाद्, अनुमानस्य व्याप्त्यादिज्ञानविलम्बेन सर्वत्रानावश्यकत्वाच्च। किञ्च, सामानाधिकरण्यं व्याप्तिः। सा च प्रत्येकं धूमस्य भिन्नैव। तथा च पर्वतीयधूमव्याप्तेस्तत्संयोगरूपायास्तद्धूमज्ञानमन्तरेण ज्ञानासम्भवः। न च तज्ज्ञानमन्तरेणानुमितिः। लाघवेन समानविषयकव्याप्तिज्ञानस्य हेतुत्वात्। पूर्वगृहीतमहानसीयवह्निव्याप्तेः पर्वतधूमवृत्तितयोपनीतभाने भ्रमत्वापत्तेः। एवं प्रतिव्यक्ति शक्तिग्रहानुरोधादपि सामान्यलक्ष-

णा। अन्यथा घटपदात् शक्यत्वेन गृहीतघटव्यक्तेरेवोपस्थितिः स्यात्, न त्वपूर्वघटव्यक्तेः। समानविषकज्ञानस्य तादृशपदार्थोपस्थितौ शाब्दबोधे च प्रयोजकत्वात्। न च समानप्रकारकत्वं तत्र नियामकं, न तु समानविषयत्वमिति वाच्यम्। तथा (च? सति) घटत्वप्रकारकशक्तिज्ञानाद् घटत्वेन प्रकारेण पटादेरप्युपस्थितिप्रसङ्गात्। तत्र नियामकान्तरकल्पनापेक्षया समानविषयत्वस्य नियामकत्वकल्पनायां लघुत्वात्। अत एव सम्प्रदायमतमप्यनवद्यं, ज्ञानेच्छयोः समानप्रकारकत्वे सति समानविशेष्यकत्वेन हेतुहेतुमद्भावादिच्छाविशेष्यभूतानागतपाकज्ञानार्थं सामान्यलक्षणाया आवश्यकत्वात्। न च ज्ञानेच्छयोः समानप्रकारतामात्रेण हेतुहेतुमद्भावो न समानविशेष्यकत्वेनापि, गौरवादिति वाच्यम्। तथा सति घटत्वप्रकारकज्ञानात् तत्प्रकारकपटविशेष्यकेच्छोत्पादप्रसङ्गात्। न चेच्छायाः स्वजनकज्ञानप्रकाराश्रयविशेष्यकत्वनियमाद् न पटविशेष्यकत्वं घटत्वप्रकारकेच्छाया इति वाच्यम्। तथा सति भ्रमस्थले रजतत्वप्रकारिकायाः शुक्तिविशेष्यकेच्छाया अनुत्पादप्रसङ्गात्। न च स्वजनकज्ञानप्रकारागृहीतासंसर्गधर्मिविशेष्यकत्वमिच्छाया इति वाच्यम्। एतदपेक्षया स्वजनकज्ञानसमानविशेष्यकत्वस्यैव लघुत्वेन नियामकत्वकल्पनाया औचित्यात्।

वयं तु ब्रूमः—सामान्यलक्षणां विना घटो नास्तीति सामान्याभावधीर्न स्यात्। प्रतियोगिज्ञानं विनाभावबुद्ध्यनुत्पादात्। प्रतियोगिनां च घटत्वावाच्छिन्नानां प्रकारान्तरेण ज्ञातुमशक्तेः। न चाभावबुद्धौ प्रतियोगिज्ञानत्वेन हेतुता न तु यावत्प्रतियोगिज्ञानत्वेन, गौरवादिति वाच्यम्। विशेषाभावग्रहस्थले तत्तत्प्रतियोगिज्ञानत्वेनैव तत्तत्प्रतियोगिज्ञानस्य हेतुत्वकल्पनात् सामान्याभावस्यापि यावद्विशेषप्रतियोगित्वेनावश्यं तावज्ज्ञानसापेक्षज्ञानतया यावत्प्रतियोगिज्ञानस्य तज्ज्ञानहेतुत्वावश्यकत्वात्। यदि च यावद्विशेषाभावस्यैव घटो नास्तीति प्रत्ययविषयत्वमङ्गीक्रियते, तदा सामान्यलक्षणा सुतरामुररीकार्या। त(द्द? दू)रीकरणं विना तत्प्रतियोगिसहस्रस्य ज्ञानाभावेन तत्प्रत्यक्षासम्भवादिति।

अस्मत्पितृचरणास्तु— अनुमितिविषयतायां नियामकान्तरस्य वक्तुमशक्यतया व्यापकत्वेन गृहीतत्वस्य तन्नियामकत्वं वाच्यम्। तच्च पर्वतीयवह्नेः सामान्यलक्षणां विना न सम्भवति। अनुमानस्यानवस्थादुःस्थत्वात्, प्रणालीसहस्रकल्पने गौरवाच्च। न च व्यापकतावच्छेदकत्वेन गृहीतधर्माश्रयत्वं नियामकम्।

भ्रमानुमितावव्याप्तेः । न च तत्राप्यन्यत्रस्थ एव वह्निर्विषयः । पर्वतातिरिक्तवृत्ति-वह्निः पर्वते नास्तीति ज्ञानानन्तरं पर्वतो वह्निमानिति भ्रमानुमितौ गुञ्जापुञ्जादेरेव तत्त्वेन विषयत्वात् । किञ्च गौरवमपि, व्यापकत्वेन गृहीतत्वापेक्षया व्यापकतावच्छेदकत्वेन गृहीतधर्माश्रयत्वस्यातिगुरुत्वादित्याहुः ।

नव्यास्तु — घटत्वात्यन्ताभावप्रत्ययानुपपत्तिरेव सामान्यप्रत्यासत्तौ प्रमाणम् । तथाहि — प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानमभावधीहेतुः । तच्चेह घटत्वत्वम् । तच्च घटेतरावृत्तित्वे सति सकलघटवृत्तित्वम् । तज्ज्ञानं च सकलघटज्ञानमन्तरेण न सम्भवति । तदर्थं सामान्यप्रत्यासत्तिः कल्पनीयेति वदन्ति । तच्चिन्त्यं, घटेतरावृत्तित्वे सति घटनिष्ठात्यन्ताभावाप्रतियोगित्वस्यैव घटत्वत्वपदार्थतया तज्ज्ञानस्य तया विनापि सम्भवादिति ।

ननु सामान्यलक्षणाङ्गीकारे सर्वसार्वज्ञ्यापत्तिः, संशयानुपपत्तिश्च । न च तेन रूपेण सार्वज्ञ्यसंशयाभावावङ्गीक्रियेते एव, रूपान्तरेण त्वापादकाभावः । तत्प्रकारकज्ञानाभावादिति वाच्यम् । भासमानवैशिष्ट्यप्रतियोगित्वस्यैव प्रकारत्वरूपतया प्रमेयमिति ज्ञाने घटत्वादिसकलवैशिष्ट्यभानेन प्रकारत्वस्य घटत्वादावनपायात् । तत्प्रकारकसंशयानुपपत्तेरेवापाद्यत्वात् । न च जनकज्ञानविषयत्वमपि प्रकारताघटकं, तच्च प्रमेयमिति ज्ञाने प्रमेयत्वस्यैव, न तु घटत्वादेरिति नातिप्रसङ्ग इति वाच्यम् । प्रमेयवानिति ज्ञाने प्रमेयमात्रस्यैव जनकज्ञानविषयत्वेन प्रकारतया घटत्वादिप्रकारकसंशयविरोधित्वापातस्य वज्रलेपत्वादिति । मैवम् । तत्प्रकारकं ज्ञानं संशयविरोधीति सत्यं, परं तु प्रकारो द्विविधः किञ्चिदवच्छिन्नः, अन्यानवच्छिन्नश्च । तत्राद्ये यद्रूपोपस्थितयत्प्रकारकं ज्ञानं तद्रूपोपस्थिततत्प्रकारकसंशयविरोध्येव, न तु शुद्धतत्प्रकारकसंशयविरोध्यपि । यथा दण्डिमद् गृहमिति ज्ञाने पुरुषस्य चैत्रादेः प्रकारत्वेऽपि दण्डावच्छिन्नस्यैव तथात्वाद् दण्डिमन्न वेति संशयो न भवति । अन्यादृशस्तु भवत्येव चैत्रवद् गृहं न वेति । तथाच प्रकृतेऽपि प्रमेयत्वोपस्थितसर्व(प्र)मेयप्रकारकनिश्चयः प्रमेयवान् न वेति संशयं प्रतिबध्नात्येव । घटो वा न वेत्यादिसंशयप्रतिबन्धाय तन्नालमिति न दोषशङ्कापि । अन्त्ये तु तादृशसंशयप्रतिबन्धक एव, यथा घटोऽयमिति ज्ञानं शुद्धघटत्वप्रकारकं घटो न वेति तादृशव्यावर्तकमिति । वस्तुतस्तु प्रकारत्वं ज्ञाननिरूपितस्वरूपसम्बन्धविशेषः संशयादिविरोधेन कल्प्यत इति फलबलेन घटोऽयमिति ज्ञाने घटत्वस्य स सम्ब-

न्धः, न तु प्रमेयमिति ज्ञाने घटत्वस्य । तथा सति घटो न वेति घटत्वप्रकारकसंशयविरोधित्वापातादिति ।

इदं तु ध्येयम् — सामान्यप्रत्यासत्तेरिन्द्रियसम्बद्धविशेषणतायामन्तर्भावः । इन्द्रियसम्बद्धे सामान्यव्यक्तीनां विशेषणत्वात् । न केवलं सामान्यस्यैव विशेषणतायामन्तर्भावः, अपि तु ज्ञानलक्षणयोगजलक्षणयोरपीति न षोढाप्रत्यासत्तिपरिगणनविरोधः । न च विशेषण(त ? ता)या लौकिकप्रत्यासत्तितया वर्तमानमात्रविषयग्राहकतयातीतानागतव्यक्तिभानानुपपत्तिः । इन्द्रियसम्बद्धाधेयतालक्षणविशेषणतायास्तथात्वेऽपीन्द्रियसम्बद्धाधारतालक्षणविशेषणतात्मकसामान्यप्रत्यासत्तेर्विलक्षणस्वभावतया तथानियमात् । यद्वा वैलक्षण्यस्यावश्यकतयातिरिक्तप्रत्यासत्तिरेवैषा । ज्ञानलक्षणयोगजलक्षणे अपि विशेषणतापेक्षया भिन्ने (इ ? ए)व । षोढाप्रत्यासत्तिपरिगणनं तु लौकिकप्रत्यासत्त्यभिप्रायेण । सा चैवं ज्ञायमानैव प्रत्यासत्तिः, स्वप्रकारकज्ञानजनकत्वनियमात् । अज्ञातस्य च प्रकारत्वायोगात् । वस्तुतस्त्वतीतानागतसामान्यधर्मस्यापि ज्ञाने तदाश्रयप्रत्यक्षान्न ज्ञायमानसामान्यं प्रत्यासत्तिः, किन्तु सामान्यज्ञानमेव । न च सामान्यस्य नित्यत्वादतीतानागतत्वमसिद्धमिति वाच्यम् । सामान्यप्रत्यासत्तिरित्यत्र सामान्यत्वं (च ? न) जातित्वं, तथा सति मेयत्वादेरतथाभूतस्यानासत्तित्वप्रसङ्गात् । किन्त्वनेकवृत्तिधर्मत्वम् । तच्च बहुत्वसंयोगादिसाधारणमिति सम्भवत्येव तेषामतीतानागतत्वमिति न तेषां प्रत्यक्षहेतुता, अपि तु तज्ज्ञानस्यैव । न चैवं ज्ञानप्रत्यासत्त्यभेदः । तस्य समानविषयकस्यास्य च भिन्नविषयकस्यासत्तितया भेदस्या(दि ? ति)स्फुटत्वादिति सङ्क्षेपः ।

इति भूयोदर्शनवादः ।

---

## अथोपाधिवादः ।

उपाधिज्ञानं च व्याप्तिज्ञाने ग्राह्याभावावगाहितया न प्रतिबन्धकम्, अनौपाधिक(त्व)स्याव्याप्तित्वात् । किन्तु व्यभिचारानुमितिद्वारा । अत एव तज्ज्ञानस्य व्यभिचारानुमितिदशायामनुमित्यप्रतिबन्धकत्वान्न तत्प्रतिबन्धकतानियमघटितहेत्वाभासतोपाधेरिति वक्ष्यते । अत एव 'यद्व्यभिचारित्वेन साधनस्य साध्यव्यभि-

चारित्वं, स उपाधि'रिति लक्षणं मणिकृत ऊचुः । ननु यथाश्रुतमिदमनुपपन्नम् । न ह्युपाधिव्यभिचारेण साध्यव्यभिचारः क्रियते । न च यद्व्यभिचारेण साध्यव्यभिचारानुमितिः स उपाधिः । तथा सत्यनुमितिकाल एवोपाधेर्दोषतायामनित्यदोषतापत्तेः । घटव्यभिचारेणापि धूमरूपसाध्यव्यभिचारस्य व्याप्तिभ्रमेणानुमातुं शक्यत्वाद् घटस्यापि धूमसाध्यके वह्निहेतुक उपाधितापत्तेः । न चानुमितेः प्रमात्वपर्यन्तविवक्षायामपि तत्प्रतीकारः । वह्निर्धूमव्यभिचारी घटव्यभिचारित्वाद् इत्यनुमितेरसल्लिङ्गजन्याया अपि विषयाबाधेन प्रमात्वात् । किं बहुना, आकाशादिसाध्यके घटादीनां तदव्यापकानां सर्वेषामप्युपाधितापत्तेः । आकाशादिव्यभिचारस्य घटादिव्यभिचारेण प्रमातुं शक्यत्वात् । अवृत्तिव्यभिचारस्य केवलान्वयित्वात् तत्साधने व्यभिचाराद्यभावात् । किञ्च, शुद्धयद्व्यभिचारित्वं साध्यव्यभिचारानुमापकमित्यर्थो वा, इतरसमभिव्याहारेणापि यद्व्यभिचारः साध्यव्यभिचारानुमापक इत्यर्थो वा विवक्षितः । नाद्यः । साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेः । शुद्धतद्व्यभिचारस्य साध्यव्यभिचारव्यभिचारितया तद(न)नुमापकत्वात् । नान्त्यः । गौः शुक्लः पशुत्वादित्यत्र गोत्वावच्छिन्नशुक्लत्वव्यापकस्य सास्नावत्त्वस्योपाधितापत्तेः । न च तत्र व्यभिचारानुमानासम्भवः, पशुत्वस्य गोत्वव्यभिचारितया गोत्वाव्यभिचारित्वे सति गोत्वावच्छिन्नशुक्लत्वव्यापकव्यभिचारित्वस्य साध्यव्यभिचारानुमापकस्य तत्राभावादिति वाच्यम् । पशुत्वं शुक्लत्वव्यभिचारि गोकृष्णच्छागान्यतरस्मिन् सास्नावत्त्वव्यभिचारित्वादित्येवं व्यभिचारानुमितिसम्भवात् । एवमयं गन्धो गुणत्वादित्यत्र सुरभित्वस्य गन्धत्वाव्यापकस्याप्युपाधितापत्तिः, गुणत्वं गन्धत्वव्यभिचारि असुरभित्वतद्व्याप्यगन्धत्वान्यत्वे सति सुरभित्वव्यभिचारित्वादित्येवं व्यभिचारानुमितिसम्भवात् । न च व्यभिचारस्थानान्यत्वाविशेषितेन यद्व्यभिचारित्वेन साध्यव्यभिचारित्वानुमितिरित्यर्थः । अत्र त्वसुरभित्वतद्व्याप्यगन्धत्वानां व्यभिचारित्वस्थाना(नां न? नामन्य)त्व(स्य?)विशिष्टत्वान्नोपाधित्वमिति वाच्यम् । व्यभिचारस्थानान्यत्वाविशेषितेनेत्यस्य यथाश्रुतस्यासुरभित्वात्यन्ताभाववत्त्वविशेषितव्यभिचारेण व्यभिचारानुमानमादायातिप्रसङ्गे व्यभिचारस्थानव्यावर्तकविशेषणाघटितत्वमर्थो वाच्यः । तथा च साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तिः । विशेषणाव्यभिचारित्वेन व्यभिचारस्थानव्यावर्तकविशेषणेन घटितस्यैव तद्व्यभिचारस्य साध्यव्यभिचारानुमापकत्वात् । किं बहुना, गुणत्वं गन्धत्वव्यभि-

चारि रूपे सुरभित्वव्यभिचारित्वाद् रूपत्ववदिति क्रमेण व्यभिचारानुमानसम्भवात् सुरभित्वेऽतिव्याप्तेर्दुष्परिहरत्वादिति ।

अत्र प्रतिभाति — साध्यनिष्ठोपाधिव्याप्यतावच्छेदकधर्मवत्त्वतदव्यभिचारित्वातिरिक्तधर्माविशेषितं यद्व्यभिचारित्वं हेतौ साध्यव्यभिचारित्वसाधने व्याप्तिपक्षधर्मतोभयवत्, (कदापि?) स सर्वथा तत्साध्यकतद्धेतावुपाधिः । अत एव नानित्यदोषता, न वा घटादावतिप्रसङ्गशङ्का, धूमव्यभिचारित्वसाधने घटव्यभिचारित्वस्य व्याप्त्यभावात् । न चावृत्तिसाध्यके तथापि घटादेरुपाधित्वं स्यादेव, अवृत्तिव्यभिचारित्वव्याप्यत्वाद् घटव्यभिचारित्वस्येति वाच्यम् । अवृत्तिव्यभिचारव्याप्यतायां वृत्तित्वमात्रस्यैव लाघवेनावच्छेदकत्वाद्, घटव्यभिचारित्वत्वादेरतथात्वात् । नीलधूम(त्व)स्यावच्छेदकत्वाभावेन नीलधूमस्य व्याप्त्यभाववद् घटव्यभिचारस्यावृत्तिव्यभिचाराव्याप्यत्वात् । अत एव गौः शुक्लः पशुत्वादित्यत्र न सास्नावत्त्वं गोत्वावच्छिन्नशुक्लत्वव्यापकमुपाधिः । पशुत्वं शुक्लत्वव्यभिचारीत्यत्र गोत्ववति गोत्वाव्यभिचारित्वे सतीत्यन्यतरघटितसास्नावत्त्वव्यभिचा(रीत्य? रित्व)स्याहेतुत्वात् । उभयथापि स्वरूपासिद्धत्वात् । पशुत्वस्य गोत्ववति सास्नावत्त्वव्यभिचारित्वाभावाद् गोत्वव्यभिचारित्वाच्च । अत एव 'घटः पृथिवी द्रव्यत्वादित्यत्र घटान्यत्वावच्छिन्नसाध्यव्यापकं घटावृत्तिगुणवत्त्वमुपाधिः स्यात् । द्रव्यत्वं पृथिवीत्वव्यभिचारि द्रव्यत्वमेयत्वपटत्वानीतिधीविशेष्यत्वे सति घटावृत्तिगुणवत्त्वव्यभिचारित्वाद् मेयत्ववदिति क्रमेण व्यभिचारानुमितिसम्भवात् । हेतौ द्रव्यत्वपदं पक्षधर्मत्वसिद्ध्यर्थम् । मेयत्वपदं च दृष्टान्तसिद्ध्यर्थम् । पटत्वपदं पटत्वे सत्यन्तसिद्ध्यर्थम् । न च तदेव व्यर्थमिति वाच्यम् । घटावृत्तिगुणवत्त्वव्यभिचारित्वस्य विशेष्यभागस्य तथा सति वैयर्थ्यप्रसङ्गाद्, द्रव्यत्वमेयत्वे इतिधीविशेष्यत्वस्यैव पृथिवीत्वव्यभिचारव्याप्यत्वात् । तस्माद् द्रव्यत्वमेयत्वपटत्वानीतिधीविशेष्यत्वस्य पटत्वेऽपि सत्त्वेन तत्र पृथिवीत्वव्यभिचारित्वरूपसाध्याभावेन व्यभिचारः स्यादिति घटावृत्तिगुणवत्त्वव्यभिचारित्वपदम् । न चैवमपि द्रव्यत्वमेयत्वे इतिधीविशेष्यत्वस्यैव व्याप्यत्वे तद्घटितद्रव्यत्वमेयत्वपटत्वानीतिधीविशेष्यत्वघटितहेतोः नीलधूमवदव्याप्यत्वमेवेति वाच्यम् । द्रव्यत्वमेयत्वपटत्वगोचरज्ञानस्याखण्डस्य हेतुशरीरप्रविष्टत्वेन वैयर्थ्यशङ्काविरहात् । एवं पर्वतो वह्निमान् धूमादित्यत्र व्यञ्जनवत्त्वमुपाधिः स्यात् । धूमो वह्निव्यभिचारी धूममेय-

त्वमहानसत्वानीतिधीविशेष्यत्वे सति व्यञ्जनवत्त्वव्यभिचारित्वाद् मेयत्ववदिति व्यभिचारानुमितिसम्भवादि'ति दूषणमपास्तम् । साध्यनिष्ठोपाधिव्याप्यतावच्छेदकघटान्यत्ववतीत्यस्य, घटान्यत्वाव्यभिचारित्वे सतीत्यस्य वा हेतौ प्रवेशयितुमशक्यत्वात् । घटान्यत्ववति द्रव्यत्वस्य घटावृत्तिगुणवत्त्वव्यभिचारित्वाभावाद् घटान्यत्वव्यभिचारित्वाच्च द्रव्यत्वस्य । अत एव न प्रसिद्धानुमाने व्यञ्जनवत्त्वेऽतिप्रसक्तिः । उक्तहेतोर्वह्निव्यभिचारव्याप्यत्वाभावाद्, धूम एव व्यभिचारात् । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् प्रमेयत्वाद् वेत्यत्र च बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्ष(त्व)व्यापकमुद्भूतरूपवत्त्वमुपाधिरेव । बहिर्द्रव्यत्वाव्यभिचारित्वबहिर्द्रव्यत्ववत्त्वान्यतरगर्भोद्भूतरूपवत्त्वव्यभिचारित्वस्य हेतुत्वसम्भवात् । अयं गन्धो गुणत्वादित्यत्रासुरभित्वाभावावच्छिन्नसाध्यव्यापकस्य सुरभित्वस्य तूपाधित्वमेव । गुणत्वं गन्धत्वव्यभिचारि असुरभित्वाभाववति सुरभित्वव्यभिचारित्वाद् रूपत्ववदित्यनुमानसम्भवात् । इदमेव सर्वं मनासिकृत्य पक्षधरमिश्रैः सास्नावत्त्वस्यानुपाधित्वं सुरभित्वस्य चोपाधित्वमवादीति ।

ननु शुद्धसाध्यव्यापक उक्तलक्षणमव्याप्तं, साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठोपाधिव्याप्यतावच्छेदकधर्मस्य तत्राभावेन तद्घटितलक्षणासम्भवादिति चेद्, न । व्याप्यतान्यूनवृत्तिमात्रस्य व्याप्यतावच्छेदकत्वेन विवक्षितत्वाद्, न तु स्वरूपसम्बन्धविशेषोऽनतिप्रसक्तोऽवच्छेदकान्तरासमानाधिकरणो वा उपाधिव्याप्यत्वावच्छेदकत्वेन विवक्षितः । तथा च शुद्धसाध्यव्यापकेऽपि द्रव्यत्वादिकमार्द्रेन्धनादिव्याप्यतावच्छेदकं भवत्येवेति न कोऽपि दोषः । वस्तुतस्तु — साध्यनिष्ठोपाधिव्याप्यतावच्छेदकमात्रमेव प्रकृतलक्षणे प्रविष्टम् । तच्च शुद्धसाध्यव्यापके साध्यतावच्छेदकमेव । साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोस्तु साधनपक्षधर्माविति नाव्याप्तिगन्धोऽपि । यद्वा साध्यनिष्ठोपाधिव्याप्यतावच्छेदकधर्मवति यद्व्यभिचारस्थले साधनस्य साध्यव्यभिचारनियमः, स तत्रोपाधिः । अत एव वायुः प्रत्यक्षः प्रमेयत्वादित्यत्रोद्भूतरूपवत्त्वमुपाधिः । बहिर्द्रव्ये वाय्वादावुद्भूतरूपव्यभिचारिणि मेयत्वे प्रत्यक्षत्वव्यभिचारित्वात् । अत एव उपाध्याया नियमार्थे तृतीयेति व्याख्यातवन्तः । यत्तु — यद्व्यभिचारित्वेन साध्यव्यभिचार इत्यत्र व्यभिचारपदमुभयत्राप्यव्याप्यत्वपरम् । अन्यथा इदं द्रव्यमाकाशादित्यत्र परिमाणवत्त्वोपाधौ स्वाव्याप्यत्वेन द्रव्यत्वाव्याप्यत्वसाधने उपाधिलक्षणाभावेना-

व्याप्तिप्रसङ्गादिति । (तं च ? तन्न ।) तत्र व्यर्थतयोपाध्यव्याप्यत्वस्याकाशे साध्याव्याप्यत्वासाधकत्वाद्, (घट ? अ)वृत्तित्वेन वा अव्याप्यत्वेन वा तत्साधनात्। किञ्च, उपाधिव्यवस्था पारिभाषिकी। सा च व्यभिचारोन्नायक एव शास्त्रकारस्य नान्यत्रेति, अव्याप्यत्वानुमानेऽपि न तस्य संग्राह्यता । अन्यथा हेत्वाभासान्तरोन्नायकेऽव्याप्तिरित्येव कुतो नाशङ्केथाः । शास्त्रकाराव्यवहारश्च समान एवेति दिक् ।

ननु साध्यव्यभिचारोन्नायकः कस्यचिद् व्यभिचारः कस्यचिन्नेत्यत्र नियामकाभावः । न च साध्यव्यापकव्यभिचार एव तथा । साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकत्वस्थलाव्याप्तेरिति चेद्, न । पर्यवसितसाध्यव्यापकव्यभिचारस्य तथात्वात् । पर्यवसितत्वं च साध्यप्रसिद्ध्यवच्छेदकधर्मावच्छिन्नत्वम् । साध्यप्रसिद्ध्यवच्छेदकत्वं च साध्यप्रसिद्ध्यधिकरणवृत्तित्वम् । तेन बहिर्द्रव्यत्वादौ पक्षधर्मे नाव्याप्तिः । एवं च 'साध्यप्रसिद्ध्यधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमपि लक्षणान्तरं पर्यवस्यती'ति मणिकृतः ।

अत्र वदन्ति — एवं सति प्रसिद्धानुमाने महानसत्वावच्छिन्नसाध्यव्यापकं व्यञ्जनवत्त्वमुपाधिः स्याद्, महानसत्वस्यापि साध्यप्रसिद्ध्यधिकरणवृत्तित्वात् । न चेष्टापत्तिः । सर्वेषामेव हेतूनामेवं सोपाधित्वे सोपाधिनिरुपाधिव्यवस्थाभङ्गप्रसङ्गादिति ।

अत्रोपाध्यायाः — साधनवति साध्यप्रसिद्ध्यन्यूनवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं विवक्षितम् । बहिर्द्रव्यत्वादिकं च तथा, प्रत्यक्षस्पर्शाश्रयत्ववति प्रत्यक्षत्वप्रसिद्ध्यन्यूनवृत्तित्वात् । अतस्तदवच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वमुपाधिरेव। महानसत्वं च धूमवति वह्निप्रसिद्धिन्यूनवृ(त्तिरे?त्त्ये)वेति न तदवच्छिन्नवह्निव्यापकं व्यञ्जनवत्त्वमुपाधिः । यद्वा, साधनव्यापकीभूतत्वं साध्यप्रसिद्ध्यवच्छेदकधर्मविशेषणं, बहिर्द्र(व्यं ? व्यत्वं) च प्रत्यक्षस्पर्शाश्रयत्वव्यापकम्, अतो बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वमुपाधिः । महानसत्वं च न धूमव्यापकं, पर्वतादौ व्यभिचाराद्, इति न महानसत्वावच्छिन्नवह्निव्यापकं व्यञ्जनवत्त्वमुपाधिरिति समादधुः ।

तच्चिन्त्यम् — वायुः प्रत्यक्षः वायुत्वादित्यत्रोद्भूतरूपवत्त्वोपाधा(व)व्याप्तिः, साधनवति साध्याप्रसिद्धेः । किञ्च, वायुः प्रत्यक्षः मेयत्वादित्यत्रोद्भूतरूपवत्त्वमु-

पाधिर्न स्यात्। बहिर्द्रव्यत्वस्य मेयत्ववति प्रत्यक्षत्वप्रसिद्धिन्यूनवृत्तित्वाद् मेयत्वाव्यापकत्वाच्च। न च तत्र प्रत्यक्षसामग्र्या एवोपाधित्वं, न तूद्भूतरूपवत्त्वस्येति वाच्यम्। स्वयमसामर्थ्येन तथोक्तावविश्वासात्। न च विशेषणाव्यभिचारि(त्व)-सहकारेण यद्व्यभिचारः साध्यव्यभिचारानुमापकः, स एवात्र लक्ष्यत इति प्रमेयत्वहेतुके प्रमेयत्वं प्रत्यक्षत्वव्यभिचारि बहिर्द्रव्यत्वाव्यभिचारित्वे सति बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकोद्भूतरूपवत्त्वव्यभिचारित्वादित्यस्यासिद्धतया साध्यव्यभिचारानुमापकत्वादुपाधित्वाभावस्तस्येष्ट एवेति वाच्यम्। विशेषणवति यद्व्यभिचारः साध्यव्यभिचारानुमापक इत्येव लाघवाल्लक्ष्यताप्रयोजकं, तच्च प्रमेयत्वहेतुकेऽप्यस्त्येव, प्रमेयत्वं प्रत्यक्षत्वव्यभिचारि, बहिर्द्रव्यत्ववति उद्भूतरूपवत्त्वव्यभिचारित्वादित्येवं व्यभिचारानुमानसम्भवादिति तत्राव्याप्तिः कथं न दोषाय भवेदिति न किञ्चिदेतत्।

इदं तु सम्भाव्यते — पर्यवसितपदमुभयत्रापि साध्ये साधने च देयं, तथा च यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वं लक्षणार्थः। महानसत्वावच्छिन्नवह्निव्यापके तदवच्छिन्नधूमव्यापके च व्यञ्जनवत्त्वे तदभावान्नातिव्याप्तिः। पक्षधर्मावच्छिन्नसाध्यव्यापके चोद्भूतरूपवत्त्वोपाधौ बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापके बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षस्पर्शाश्रयत्वाव्यापकत्वसत्त्वान्नाव्याप्तिः। यद्वा, यत्र साधनाव्यापकत्वं, तद्वृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं विवक्षितम्। व्यञ्जनवत्त्वन्तु पर्वतादौ धूमाव्यापकं तद्वृत्तिधर्मावच्छिन्नवह्निव्यापकं न भव(ती?)ति, पर्वतादावेव व्यभिचारादिति न तत्रातिव्याप्तिः। अथवा, उपाध्यनधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं विवक्षितम्। व्यञ्जनवत्त्वं च न तथा, स्वानधिकरणधूमाधिकरणगोष्ठादिवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वाभावादिति न तत्रातिव्याप्तिरिति।

अत्र कश्चित् — गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यत्र एतद्गन्धप्रागभावकालीनरूपवत्त्वमेव तद्गन्धप्रागभावकालीनत्वावच्छिन्नगन्धव्यापकमुपाधिः स्यात्। एतद्गन्धप्रागभावकालीनत्वावच्छिन्नगन्धव्यापकस्यैतद्गन्धप्रागभावकालीनरूपवत्त्वस्यैतद्गन्धप्रागभावकालीनत्वावच्छिन्नपृथिवीत्वाव्यापक-

१. 'रानु' क. पाठः.

त्वात्, पक्ष एव व्यभिचारात्। एवमेतत्कालीनरूपवत्त्वस्य पक्षे पृथिवीत्वाव्यापकस्य तद्वृत्त्येतद्गन्धप्रागभावकालीनत्वावच्छिन्नगन्धव्यापकत्वसत्त्वाद् द्वितीयलक्षणस्यापि तत्रातिव्याप्तिः। एवमेतत्कालीनरूपवत्त्वानाधिकरणपृथिवीत्वाधिकरणपक्षीभूतघटवृत्त्येतद्गन्धप्रागभावकालीनत्वरूपधर्मावच्छिन्नसाध्यव्यापकत्वसत्त्वादेतत्कालीनरूपवत्त्वस्य तृतीयलक्षणमपि तत्रातिव्याप्तमेव। किञ्च, घटः पृथिवी द्रव्यत्वादित्यत्र घटान्यत्वावच्छिन्नपृथिवीत्वव्यापकस्य घटावृत्तिगुणवत्त्वस्योपाधित्वाभावापत्तिः। घटान्यत्वावच्छिन्नपृथिवीत्वव्यापकस्य तदवच्छिन्नद्रव्यत्वव्यापकत्वाद्, घटे द्रव्यत्वाव्यापकस्य तद्वृत्तिधर्मावच्छिन्नसाध्याव्यापकत्वाद्, घटावृत्तिगुणवत्त्वानधिकरणद्रव्यत्वाधिकरणघटवृत्तिधर्मावच्छिन्नसाध्याव्यापकत्वाच्चेति दूषणमाह। तदमञ्जुलम्। तद्धर्मावच्छिन्नेत्यस्य तद्धर्मसामानाधिकरण्यावच्छिन्नेत्यर्थः। तथा च तद्धर्मसामानाधिकरण्यावच्छिन्नसाध्यव्यापकत्वमर्थः। न चैतदेतद्गन्धप्रागभावकालीनरूपवत्त्वेऽ(स्तीति ? स्ति।) एतद्गन्धप्रागभावकालीनत्वसामानाधिकरण्यावच्छिन्नगन्धस्यैतद्घट एव पक्षीभूते सत्त्वेन तत्रैतत्कालीनरूपवत्त्वाभावेन व्यभिचारात्। एवमग्रिमलक्षणद्वयेऽपि न तत्रातिप्रसङ्गः, धर्मावच्छिन्नपदस्य सर्वत्र सामानाधिकरण्यावच्छिन्नार्थत्वकल्पनात्। यच्च किञ्चेत्यादिना दूषणमुक्तं, तदपि न। घटावृत्तिगुणवत्त्वानुपाधित्वस्य प्रागेव प्रतिपादिततया तत्राव्याप्तेरदोषत्वात्। यदि च तदुपाधित्वमवश्यं स्वीक्रियत एव, तदा स्वविशिष्टोपाध्यनधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं लक्षणम्। स्वपदं च साध्यपरम्। तथा च पृथिवीत्वविशिष्टघटावृत्तिगुणवत्त्वानधिकरणं यद् द्रव्यत्वाधिकरणं जलादि, तत्तद्वृत्तिघटान्यत्वावच्छिन्नपृथिवीत्वव्यापकत्वमस्त्येव घटावृत्तिगुणवत्वस्येति न तत्राव्याप्तिरिति।

पक्षधरमिश्रास्तु — यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वमेव लक्षणार्थः। न चैवं सति व्यञ्जनवत्त्वे महानसत्वावच्छिन्नसाध्यव्यापकेऽतिव्याप्तिः। महानसत्वावच्छिन्नवह्नौ साध्ये तस्याप्युपाधित्वेन संग्राह्यत्वात्। व्यभिचारानुमापकतावच्छेदकस्योक्तलक्षणस्य विशिष्टव्यभिचारोन्नायके व्यञ्जनवत्त्वे सत्त्वस्यादोषत्वादित्याहुः।

ततु न बुध्यते। शुद्धसाध्यव्यभिचारोन्नायकतावच्छेदकस्य प्रकृते विचा-

१. 'स्वा' क. पाठः.

र्यत्वात्, तस्य च यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वरूपस्य व्यञ्जनवत्त्वेऽपि सत्त्वेन ततोऽपि शुद्धसाध्यव्यभिचारोन्नयनापत्तेर्वारयितुमशक्यत्वादिति ।

वस्तुतस्तु — यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति शुद्धसाध्यव्यापकव्यभिचारिसाधनाव्यापकत्वं लक्षणम् । अत एव न व्यञ्जनवत्त्वादावतिप्रसङ्गः, तत्र शुद्धवह्निव्यापकव्यभिचारित्वस्य धूमेऽभावात् । साधनावच्छिन्नपक्षधर्मावच्छिन्नयोरपि शुद्धसाध्यव्यापकं प्रत्यक्षसामग्र्यादि, तद्व्यभिचारिप्रत्यक्षस्पर्शाश्रयत्वादिरूपसाधनाव्यापकत्वमुद्भूतरूपवत्त्वादेरुपाधेरस्त्येवेति नाव्याप्तिः । एवं च घटः पृथिवी द्रव्यत्वादित्यत्र घटावृत्तिगुणवत्त्वं घटान्यत्वावच्छिन्नसाध्यव्यापकमुपाधिरेव । तत्र द्रव्यत्वस्य साधनस्य पृथिवीत्वरूपसाध्यव्यापकगन्धवत्त्वव्यभिचारित्वात् । गौः शुक्लः पशुत्वादित्यत्रापि गोत्वावच्छिन्नशुक्लत्वव्यापकं सास्नावत्त्वमुपाधिरेव । एवमन्यत्राप्यूह्यम् । यद्वा, यत्किञ्चिद्धर्मावच्छिन्नव्यभिचारिसाध्यव्यापकत्वे सति साधनाव्यापकत्वं लक्षणम् । व्यञ्जनवत्त्वादौ व्यभिचारिसाध्यव्यापकत्वाभावान्नातिव्याप्तिः । साध्यव्यभिचारिसाधनाव्यापकत्वे सति यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वं वा लक्षणार्थः । अथवा, यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साध्यानधिकरणे साधनाव्यापकत्वं विवक्षितम् । न च व्यञ्जनवत्त्वं तथा, तस्य धूमाव्यापकत्वेऽपि वह्न्यनधिकरणे तदभावात्, तत्र धूमस्यासत्त्वादिति दिक् ।

इदं तु विचार्यते — व्यभिचारघटितोपाधिज्ञानं वा प्रतिबन्धकं, साध्यव्यापकत्वादिघटितं तज्ज्ञानं वा । नाद्यः । साधने साध्यव्यभिचारस्य साध्यव्यापकत्वादिग्रहोत्तरकल्प्यत्वात्, व्यापकव्यभिचारिणो व्याप्यव्यभिचारित्वनियमात् । न तु प्रथममेव तद्ग्रहः, उपाधेर्व्यर्थतापत्तेः । नापरः । यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वज्ञानस्य प्रतिबन्धकत्वे व्यञ्जनवत्त्वस्यापि तद्ग्रहात् तेनापि वह्न्यनुमितिप्रतिबन्धापत्तेः । शुद्धसाध्यव्यापकत्वज्ञानस्य प्रतिबन्धकत्वे साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यप्रतिबन्धकत्वप्रसङ्गः । न च यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वज्ञानं प्रतिबन्धकमिति नाप्रसङ्गातिप्रसङ्गाविति वाच्यम् । तथा सति भिन्नभिन्नधर्मावच्छेदेन साध्यव्यापकत्वसाधनाव्यापकत्वयोर्ग्रहे प्रतिबन्धानापत्तेः, शुद्धसाध्यव्यापकत्वेन ग्रहे प्रतिबन्ध(का ? कत्वा)

भावप्रसक्तेश्च । न च शुद्धसाध्यव्यापकत्वेन गृहीतो व्यभिचारानुमानसमर्थोऽपि उपाधिविधया न गमकः, तद्धर्मावच्छिन्नेत्यादिरूपोपस्थितस्यैवोपाधित्वेन दूषकत्वादिति वाच्यम् । एवं सति पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचारात् साध्यव्यभिचारानुमितावपि स उपाधित्वेन दूषण एव नेत्युक्त्वा निवृत्तो भव । किमिति सर्वसाधारण्याय प्राणांस्त्यजसि । महदिदमाश्चर्यं यच्छुद्धसाध्यव्यापक(मे ? एव) न तत्तया दूषक इति ।

तत्र केचित्—इदं सर्वमुपाधेस्त्रिविधस्यापि संग्राहकं लक्षणम् । प्रतिबन्धकं तु क्वचित् साध्यव्यापकत्वज्ञानं, क्वचित् पक्षधर्मावच्छिन्नसाध्यव्यापकत्वज्ञानमित्यननुगम एव दूषकतायामुपाधेरिति वदन्ति ।

ननु परमाणुरूपं प्रत्यक्षं प्रमेयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्त्वं भवत्युपाधिः । स च न शुद्धसाध्यव्यापकः, न वा साधनावच्छिन्नसाध्यव्यापकः, न वा पक्षधर्मावच्छिन्नसाध्यव्यापकः, बहिर्द्रव्यत्वस्यासाधनत्वादपक्षधर्मत्वाच्च । तथा चायं तुरीयः स्यात् । तथा चापसिद्धान्तः । न च परमाणुरूपबहिर्द्रव्यान्यतरत्वावच्छिन्नसाध्यव्यापक एवोपाधिरिति पक्षधर्मावच्छिन्नसाध्यव्यापक एवेति वाच्यम् । घटरूपपक्षत्वे तथाप्युक्तदोषात् । नहि घटरूपबहिर्द्र(व्यत्वाऽव्या)न्यतरत्वावच्छिन्नप्रत्यक्षत्वव्यापकता उद्भूतरूपवत्त्वस्य सम्भवति, घटरूप एव व्यभिचारादिति ।

अत्र केचित्—साधनसमानाधिकरणधर्मस्यैव पक्षधर्मपदेन विवक्षितत्वाद् बहिर्द्रव्यत्वमपि प्रमेयत्वरूपसाधनसमानाधिकरणत्वेन पक्षधर्म एवेति नोपाधिचातुर्विध्यम् । न चैवं साधनस्यापि पक्षधर्म एवान्तर्भावः स्यात्, स्वस्यापि स्वसमानाधिकरणत्वात् । तथा च तुरीयत्वं निराचिकीर्षुणोपाधेस्त्रितयत्वमपि व्याहतमिति पुत्रार्थं गता भर्तारमपि भुक्त्वा समागतेति जातमिति वाच्यम् । साधनेतरसाधनसमानाधिकरणधर्मस्य गोबलीवर्दन्यायेन पक्षधर्मपदेन विवक्षितत्वादिति समादधते ।

तच्चिन्त्यं—घटरूपं प्रत्यक्षं कर्मत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकस्योद्भूतरूपवत्त्वोपाधेः तुरीयतापत्तेर्वज्रलेपत्वाद् बहिर्द्रव्यत्वस्यासाधनत्वात्, साधनासमानाधिकरणत्वाच्च ।

तस्मादिदमत्र तत्त्वं — वायुः प्रत्यक्षः वायुत्वादित्यादौ पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेवोद्भूतरूपवत्त्वादेः, साधनावच्छिन्नसाध्यस्याप्रसिद्ध्या तद्व्यापकत्वासम्भवात्। प्रागभावो विनाशी जन्यत्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकत्वमेव भावत्वाद्युपाधेः। पक्षधर्मावच्छिन्नसाध्यस्य पक्षेऽपि सत्त्वात्, तत्र च भावत्वाद्युपाधेरभावात् पक्षधर्मावच्छिन्नसाध्यव्यापकत्वस्यासम्भवात्। न चैवं त्रैविध्यव्यवस्थितावपि घटरूपादिपक्षकप्रत्यक्षत्वसाध्यककर्मत्वादिहेतावुक्तचातुर्विध्यं न निराकृतमिति वाच्यम्। तत्र तस्योपाधित्वेनादोषत्वेऽप्यक्षतेः। उक्तत्रैविध्यस्थल एव शास्त्रकारस्योपाधित्वव्यवहारात्। यदि च तत्राप्युपाधित्वेन सङ्गतता, तदा शुद्धसाध्यव्यापकत्वे(त्यने)न साधनपक्षधर्मानवच्छिन्नसाध्यव्यापकत्वं विवक्षितमिति न काप्यनुपपत्तिः। ऋजवस्तु — उदासीनधर्मावच्छिन्नसाध्यव्यापकस्तुरीय एव। विभागस्तूपलक्षणपर इति समादधुः।

अन्ये तु — यदभावात् साधनवति क्वचित् साध्याभावः साधयितुं शक्यते, स एवोपाधिः। तथा च साधनाधिकरणं साध्याभावाधिकरणमुपाध्यभावाधिकरणत्वादित्यनुमितिर्जायमानान्यत्र साधनाधिकरणे साध्याभावस्य बाधावधारणात् पक्ष एव साध्याभावं गोचरीकरोतीति सत्प्रतिपक्ष एव पर्यवसानमित्याहुः।

तच्चिन्त्यं — क्वचिदेवं सत्प्रतिपक्षपर्यवसानेऽपि यत्र पक्षे साध्यसाधनोपाधीनां निर्णयः, अनुमित्सया चानुमानप्रवृत्तिस्तत्र पक्षे साध्याभावविषयत्वस्यासम्भवेन भिन्नविषयतया सत्प्रतिपक्षासम्भवाद् व्यभिचारानुमान एव पर्यवसानमिति दिक्।

ननु साध्यव्यापकोपाधिव्यभिचारितया हेतौ कथं साध्यव्यभिचारित्वानुमितिः। यतः साध्यव्याप्यहेत्वव्यापकतया उपाधेरेव साध्याव्यापकत्वानुमित्या साध्यव्यापकत्वज्ञानासम्भव इति चेद्, न। उपाधौ साध्यव्यापकताग्राहकस्य बलवत्त्वेन तत्र साध्यव्यापकताग्रहात् तद्व्यभिचारेण हेतौ साध्यव्यभिचारानुमितिसम्भवात्। यदि च हेतुसाध्ययोः साध्योपाध्योश्च तुल्यमेव व्याप्तिग्राहकं, तदोपाधौ साध्यव्यापकत्वसन्देहेन हेतावपि साध्यव्यापकव्यभिचारित्वसंशयाहितसाध्यव्यभिचारसंशय इति भवत्येव तथाप्यनुमितिप्रतिबन्धः।

इदं त्ववधातव्यं — परामर्शोत्पत्तिपूर्वमुपाधिप्रतिसन्धाने तेन व्यभिचारो व्याप्त्यभावो वा ज्ञायत इति करणविघटनादनुमितिप्रतिबन्धकत्वमुपाधेः, परामर्श

उत्पन्ने तु समबलतादशायां सत्प्रतिपक्षद्वारा, अधिकबलतादशायां तु बाधद्वारा प्रतिबन्धकत्वम् । न चोपाधिव्यभिचाराद् व्यभिचारानुमित्यनावश्यकत्वेन तद्घटितोपाधिलक्षणव्याहतिरिति वाच्यम्। तत्स्वरूपयोग्यताघटितत्वात् तल्लक्षणस्येति पूर्वमेवोक्तत्वादिति। व्यभिचारज्ञानं चोपाधिव्यभिचारित्वरूपविशेषदर्शनजन्यं क्वचिल्लौकिकप्रत्यक्षं, क्वचिदुपाधिव्यभिचारित्वेन साध्यव्यभिचारानुमितिरू(पः ? पम्)। न च साक्षात्कारनिश्चये साक्षात्कारविपरीतज्ञानस्य विरोधित्वात् कथं व्यभिचारानुमितिर्व्याप्तिप्रत्यक्षविरोधिनीति वाच्यम् । अन्यत्र तथात्वेऽपि व्यभिचारज्ञानस्य तज्ज्ञानत्वेनैव प्रतिबन्धकत्वात् । अन्यथान्यत्र ग्राह्यसंशयस्याप्रतिबन्धकत्वात् सन्दिग्धानैकान्तिकमप्यप्रतिबन्धकं स्यात् । तथा च व्यभिचारानुमितिरप्यव्यभिचारप्रत्यक्षप्रतिबन्धिकैव ।

इदं तु शङ्कयते — व्यभिचारानुमितिसामग्रीभूतस्य परामर्शस्यैवाव्यभिचारप्रत्यक्षप्रतिबन्धकत्वमस्तु । यद्धीर्यत्र प्रतिबन्धिका, तत्र तत्सामग्र्यपीति युक्तेस्तत्प्रतिबन्धकतावश्यकत्वस्योभयसिद्धत्वात् । अन्यथा विशेषदर्शनादीनां संशयादिप्रतिबन्धकतापि न स्यादिति ।

अत्रोच्यते — अनुमितिप्रतिबन्धकत्वं विना तत्सामग्रीभूतपरामर्शस्य प्रतिबन्धकत्वे मानाभावः । प्रतिबन्ध(क)धीसामग्रीत्वरूपविपक्षबाधकतर्काभावात् । न च पूर्वमेव[1] तत्सामग्र्यैव प्रतिबन्धे जाते व्यभिचारानुमितिः किं प्रतिबध्नात्विति वाच्यम् । प्रतिबन्धयोग्यतासत्त्वे परामर्शनाशकालीनव्याप्तिप्रत्यक्षस्य प्रसक्तस्य तया प्रतिबन्धसम्भवादिति दिक् ।

उपाधिश्च द्विविधः — निश्चितोपाधिः सन्दिग्धोपाधिश्च । तत्राद्यस्य दूषकतोक्तैव । अन्त्यस्य तु साध्यव्यापकत्वसाधनाव्यापकत्वान्यतरसन्देहेन व्यभिचारसंशयाद्यासञ्जकतया दूषकत्वम् । नन्विदमनुपपन्नम् । स श्यामो मित्रातनयत्वादित्यादौ शाकपाकजत्वस्य साधनाव्यापकत्वसंशयः पक्ष एव वाच्यः । अन्यत्र मित्रातनये श्यामत्वनिश्चयेन शाकपाकजन्यत्वनिश्चयात् । तथा च तत्संशयेन पक्षे साध्याभावसंशयात्मकव्यभिचारसंशयो जननीयः । स च न दोषः, हेतुमत्त्वेन निश्चिते साध्यसंशयात्मकव्यभिचारसंशयस्यादोषत्वात् । अन्यथानुमानमात्रविलयप्रसङ्गादिति ।

१. 'मेत' क. पाठः.

अत्रोपाध्यायाः — व्यभिचारसंशयमात्रमेव दूषणं, व्यभिचारज्ञानत्वेनैव लाघवात् प्रतिबन्धकत्वात्। तथा च हेतुमति साध्यसन्देहोऽपि प्रतिबन्धक एव। तर्कादिना तदपनये सत्यनुमानप्रवृत्तिरिति न तन्मात्रोच्छेद इति समादधुः।

तत्र पक्षधरमिश्राः — व्यभिचारसंशयमात्रस्य प्रतिबन्धकत्वेऽनुमानमात्र एव पक्षीयव्यभिचारशङ्कापनोदनार्थं तर्कापेक्षापत्तेः, तर्कमूलभूतव्याप्तेरपि निश्चयार्थं तर्कान्तरानुसारेणानवस्थाप्रसङ्गाच्चेति दूषणमाहुः।

अत्र केचित् — साध्यसंशयः सर्वत्र भविष्यत्येवेत्यत्र मानाभावः, कोटिस्मृत्यादिहेत्वनियमात्। तथा च सर्वत्र न तर्कापेक्षेति नैतद् दूषणमिति।

अत्रायं मिश्राणां समाधिः — सन्दिग्धसाध्यवति सर्वत्र तर्कापेक्षापत्तिः। नहि सर्वत्र तर्कापेक्षेति कश्चिद् ब्रूते, अनुभवसाक्षिकं वा। किञ्चैवं तत्र तर्कमूलभूतव्याप्तेरपि पक्षीयसाध्यसन्देहेन निश्चयासम्भव इत्यत्रापि तर्कान्तरापेक्षायामनवस्थेति।

तस्मादत्रायं समाधिः — अनुमानमात्रोच्छेदापत्त्या सर्वत्र संशयः प्रतिबन्धक इति मास्तु। पक्षताघटकसंशयान्यसंशयत्वेन प्रतिबन्धकत्वात्। तथा च स्वारसिकसाध्यसंशयस्य पक्षताघटकतया न प्रतिबन्धकत्वमिति नानुमानमात्रोच्छेदः। अन्याहितसंशयस्तु न पक्षताघटक इति प्रतिबन्धकः स्यादेव। वस्तुतस्तूपाध्यादिसन्देहाहितसन्देहस्य पृथगेव विरोधित्वम्, अन्याहितसंशयस्य प्रामाण्यसंशयाहितार्थसंशयादेरिव प्रतिबन्धकतौचित्यादिति।

इदं त्ववधेयं — परामर्शात् पूर्वमुपाधिसंशयस्य व्यभिचारादिसन्देहाधायकत्वेन दूषकत्वं, परामर्शानन्तरं च बाधसंशयाधायकतया दोषत्वम्। न च ग्राह्यसंशयतया बाधसंशयो न विरोधीति किं तदाधायकत्वेनेति वाच्यम्। अन्याहितव्यभिचारसंशयवत् तादृशबाधसंशयस्यापि प्रतिबन्धकतायां युक्तिसाम्यादिति संक्षेपः॥

उपाधिवादः समाप्तः।

---

## अथ पक्षधर्मतावादः।

व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते। सा च पक्षताश्रयवृत्तिता। पक्षता च

---

१. 'ति त' क. पाठः.

सन्दिग्धसाध्यकत्वमिति प्राञ्चः । तन्न । साध्यसंशयस्योपलक्षणत्वे निश्चितेऽप्यनुमित्यापातात् । विशेषणत्वे चानुमितिपूर्वं नियमतः सत्ता वाच्या, सा चास(म्भा!-म्भ)विनी, व्याप्तिस्मृत्यादिव्यवहितत्वात् । अत एव सिसाधयिषितसाध्यधर्मकत्वं तदित्यपि निरस्तम्, उक्तक्रमेण विशेषणतोपलक्षणत्वविकल्पग्रासादिति मणिकृतः ।

अत्रेदं शङ्क्यते — संशये विशेषणतोपलक्षणत्वविकल्पोऽस्तु, न तु सिसाधयिषायामपि । सा हि सिद्धिजनकीभूता सिद्धिविषयकेच्छा ईश्वरसाधारणा विवक्षितेति भवति विशेषणमेव । न चैवं सिद्धसाधनोच्छेदः, भगवदिच्छाया नित्यतया तद्घटितपक्षतासत्त्वस्य दुर्वारत्वादिति वाच्यम् । फलीभूतसिद्धीच्छाया एव पक्षताघटकत्वात् सिद्धसाधनस्थले फलीभूतसिद्ध्यनुत्पादेन तद्गोचरभगवदिच्छाविरहात् तस्याः फलैककल्प्यत्वात् । अत एव घनगर्जितादावव्याप्तिर्निरस्ता । तत्रानुमितेरनुभूयमानत्वेन तद्गोचरभगवदिच्छासत्त्वादिति ।

अत्र ब्रूमः — एवं सति सिद्धसाधनस्थलेऽनुमितिर्दुर्वारा, प्रहरानन्तरोत्पत्स्यमानसिद्धिगोचरभगवदिच्छायास्तदापि सत्त्वेन पक्षतायाः सत्त्वात् । न च तस्यां सत्यां पक्षतासत्त्वेऽपि भाविप्रहरानन्तरक्षणस्यैव हेतोस्तदानीमभावान्न तस्यास्तदोत्पत्तिरिति वाच्यम् । तथा सति सिद्धसाधनस्थले सर्वत्रानुमित्यनुत्पादः क्षणविशेषरूपहेतुविलम्बादेवास्त्विति पक्षता कारणमेव नेति कृतं भगवदिच्छायास्तत्कुक्षिनिक्षेपेण । किञ्च, सिद्धिसामग्रीसमवहितभगवदिच्छारूपसिसाधयिषाघटिता पक्षता ज्ञानमात्र एवाव्यभिचाराद्धेतुरस्तु । तथा चानुमित्यसाधारणजनकत्वव्याघात इति सिद्धिसमानाधिकरणसिसाधयिषाघटिता वाच्या । तथा च विशेषणत्वोपलक्षणत्वविकल्पो निर्विकल्प एव मणिकृतामिति नायं पन्था इति ।

अत्र मणिकृतः — सिसाधयिषाविरहसहकृतसाधकमानाभावः पक्षता । (सा!स) च विशिष्टाभावः क्वचित् साधकमानरूपविशेष्यविरहात्, क्वचित् सिसाधयिषाविरहरूपविशेषणविरहात्मकसिसाधयिषातः, क्वचिदुभयत इत्याहुः ।

अत्रोपाध्यायाः — मानं मितिः तत्करणं च । तथा च सिद्धितत्करणान्यान्यत्वावच्छिन्नाभावत्वेन तदुभयाभावस्य हेतुत्वं पक्षतापदवाच्यत्वं च । तथा च सिद्धसाधनस्थले संशयोत्तरप्रत्यक्षस्थले च क्वापि न पक्षतेति नानुमितिरित्याहुः ।

अत्र मिश्राः—एवं सति तृणादीनामप्यन्यान्यत्वेन वह्निजनकत्वापत्तौ शक्तिवैजात्यान्यतरकल्पना भज्येत। न चानुगतकारणतावच्छेदकासम्भवात् तत्र वैजात्यकल्पनमिति नार्थः, किन्त्वनुभवसिद्धत्वादिति वाच्यम्। क्लृप्तेनान्यान्यत्वेनोपपत्तावतीन्द्रियशक्तिकल्पनायास्तथाप्यप्रसक्तेः। तस्मादन्यान्यत्वं नावच्छेदकमिति वाच्यम्। तथा चात्रापि सिद्ध्यभावः साधकमानाभावश्च प्रत्येकमेवानुमितिहेतुः पक्षता च। लाघवात् सिद्ध्यभाव एव पक्षपदप्रवृत्तिनिमित्तमिदमुक्तमित्युपसंहारस्य मणौ दर्शनादिति।

अत्र केचित्—तृणान्यान्यत्वेन हेतुत्वे तृणफूत्काराभ्यामिवाराणि(मणि?) फूत्काराभ्यामपि वह्निप्रसङ्गात्। हेतुतावच्छेदकावच्छिन्ने सहकारिसमवधानस्यैव कार्यापादकत्वात्। अत्र तु अन्यान्यत्वस्य हेतुतावच्छेदकप्रवेशे बाधकाभावः। प्रत्युताभावद्वयापेक्षयैकाभावहेतुतैव ज्यायसी। यच्च पक्षपदप्रवृत्तिनिमित्तत्वलाघवमभ्यधायि, तदज्ञानात्। नह्यत्र परमेश्वरसङ्के(ति?)तः, येन स लघुन्येव कल्प्येत। अपि तु शास्त्रपरिभाषा। तत्र च गौरवमतन्त्रम्। अत एव मणि(कण्ठे? ग्रन्थे) संशयोत्तरप्रत्यक्षे सामग्रीसत्त्वादनुमितावापादितायां पक्षताविरहान्नानुमितिरिति क(ण्ठाव? ण्ठ)रवेणाभिहितमिति।

अत्रायमभिसन्धिर्मिश्राणाम्—अरणिफूत्काराभ्यां कार्योपपत्तेरनेकशक्तिमत्त्वेन कारणतायामपि साम्याद् दृष्टेनान्यान्यत्वेनैवोपपत्तावतीन्द्रियशक्तिकल्पनायां मानाभावाद् अन्यान्यत्वमवच्छेदककोटिप्रविष्टं न भवतीत्यवश्यं वाच्यम्। किञ्च, एककारणताकल्पना कारणताद्वयकल्पनाविरोधिनी तत्रैव, यत्र प्रत्येककारणतावच्छेदकद्वयाघटितं कारणतावच्छेदकम्। इह तु प्रत्येकाभावकारणतावच्छेदकस्यैकाभावनिष्ठकारणतावच्छेदके प्रवेशाद् अतिरिक्तान्यपदार्थप्रवेशाच्च कुत्रैकाभावहेतुतायां लाघवशङ्कापि। यच्चोक्तं शास्त्रकारपरिभाषायां गौर(वं? वम) किञ्चित्करमिति। तदत्यन्ताबोधात्। शास्त्रकारतात्पर्यस्य कल्प्यत्वस्थले तत्रापि लाघवादरात्। संशयोत्तरप्रत्यक्षेऽनुमित्यभावस्य पक्षताविरहात् प्रत्यक्षसामग्रीबलवत्त्वाद् वा सम्भव इति संशये, समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वादित्यादिमणिग्रन्थानुसारेण लाघवानुसारेण च पक्षतात्वे सिद्ध्यभावस्यैव प्रमाणप्रसरात्। किं बहुना, एवं सति कार्यमात्र एवैकमन्यान्यत्वमवच्छेदकमस्त्विति गतं

दण्डत्वादेः कारणतावच्छेदकत्वेन। यदि च दण्डचक्रान्यान्यत्वं दण्डत्वादिघटितमिति तदेव लाघवादवच्छेदकमङ्गीक्रियते, तदा प्रकृतेऽपि दीयतां दृष्टिः। तस्मात् सिसाधयिषाविरहसहकृतसिद्ध्यभाव एव पक्षता, सिसाधयिषा चानुमितिगोचरेच्छामात्रं, सा च सिद्धित्वप्रकारानुमितित्वप्रकारिका वेति विशेषो नादरणीयः।

नन्विदं लक्षणमनुपपन्नम्। सिसाधयिषा हि तल्लिङ्गकतत्पक्षकतत्साध्यकतत्पुरुषीयेच्छा पक्षताघटिका वाच्या, अन्यथातिप्रसङ्गात्। तथा च यस्य घनगर्जिताद्यनुमितौ नेच्छा, तस्य तत्सिसाधयिषाविरहेण पक्षताविरहाद् गर्जितेन घनानुमानं न स्यादिति चेद्, न। फलीभूतसिद्धावीश्वरेच्छा स्वेच्छा च प्रयोजिका। तथा च फलीभूतसिद्धिप्रयोजकतत्पक्षक(तत्)साध्यकेच्छाविरहसमानाधिकरणसिद्ध्यभावो यदात्मनि, तदात्मनि पक्षताङ्गीकाराद् घनगर्जितादावपीश्वरेच्छामादाय प्रसि(द्धि? द्धे)रदुष्टत्वात्। न च सिद्धसाधनस्थलेऽप्यनुमितिः स्याद्, ईश्वरेच्छाविरहविशिष्टसिद्ध्यभावस्य सिद्धिसत्त्वेऽपि सत्त्वादिति वाच्यम्। ईश्वरेच्छाविरहसमानाधिकरणसिद्धेरेव सिद्धिमदात्मनि सत्त्वेन तदभावाभावात्। अन्येच्छाया अन्यात्मन्यवृत्तेः। अस्तु वा तल्लिङ्गकतत्पक्षकतत्साध्यकसमानाधिकरणेच्छैव पक्षताघटिका, अतो न सिद्धसाधनस्थलेऽतिप्रसङ्गशङ्कापि। न चैवं यत्र कदापि स्वस्य तादृशेच्छा नास्ति, तत्राप्रसिद्धिरिति वाच्यम्। तत्र विशिष्टाभावरूपपक्षताया हेतुत्वे मानाभावात्। नहि सर्वत्रैकरूपेण तस्या हेतुत्वं, तल्लिङ्गकत्वादिप्रवेशेनाननुगमात्। तथा च तत्र सिद्ध्यभावमात्रमेव कारणं, लाघवादनतिप्रसङ्गाच्च। अन्यत्र तु विशिष्टाभाव इति क्वाप्रसिद्धिशङ्कापीति युक्तमुत्पश्यामः।

ननु तथापि विशेषणाभावप्रयुक्तविशिष्टाभावः कारणं क्वापि न सम्भवति, सिद्धिपरामर्शसिसाधयिषाणामेकदैकत्रासम्भवात्। योग्यात्मविशेषगुणत्रयस्यैकदानवस्थितेः। न च सिसाधयिषायोग्यताप्रयुक्तो विशिष्टाभावः। तथा सति सिद्धसाधनस्थलेऽप्यनुमित्यापातात्। योग्यतायास्तत्राप्यक्षतेरिति चेद्, न। यत्र सिद्धिपरामर्शसिद्धीष्टसाधनताज्ञानात्मकसमूहालम्बनाव्यवधानेन सिसाधयिषोत्पत्तिः, तत्रैव विशेषणाभावप्रयुक्तविशिष्टाभावस्य हेतुत्वसम्भवात्, सिद्धिपरामर्शयोरेकत्वेन गुणत्रयानवस्थानशङ्काविरहादिति प्राञ्चः।

---

१. 'बतान्या' क. पाठः.

पक्षधरमिश्रास्तु — द्वित्रक्षणान्तरितायामपि सिसाधयिषायामनुमितिदर्शनात् सिद्धिसामान्येच्छायां परामर्शोत्पत्त्युत्तरजातायामप्यनुमितिद्वयादर्शनाच्च सिसाधयिषोत्पत्त्युत्तरकालीनस्वविषयसिद्ध्यनुत्पादकाल एव तद्योग्यतारूपः पक्षताघटकः। यद्वा सिसाधयिषोत्पत्त्युत्तरकालीनत्वमपि न विशेषणम्। न चैवं सिद्धौ जातायां सिसाधयिषातोऽनुमितिर्न स्यात्, सिसाधयिषाविषयीभूतपूर्वसिद्ध्यनुत्पादकालाभावादिति वाच्यम्। इच्छायामनागतविषयकत्वनियमेन पूर्वसिद्धेः सिसाधयिषाविषयत्वाभावेनैवानातिप्रसङ्गात्। तथा च सिसाधयिषाविषयसिद्ध्यनुत्पादकाल एव सिसाधयिषायोग्यतारूपः पक्षताघटकः। वस्तुतस्तु — सिसाधयिषाविषयसिद्ध्यननुगुणानन्तरितानुत्पादकाल एव तद्योग्यतारूपः पक्षताघटकः। अत एवाद्य सिसाधयिषायां जातायामपि दैवात् सिद्ध्यनुत्पादे श्वस्तद्धटितपक्षतातो नानुमितिः, अन्तरायकालस्य सिद्ध्यननुगुणत्वात्। फलबलात् तथा कल्पनादित्याहुः। अत्र च प्रथमपक्षेऽद्य सिसाधयिषायां दैवात् सिद्ध्यनुत्पादे श्वस्तद्धटितपक्षतातोऽनुमितिप्रसङ्गः। सिसाधयिषाविषयसिद्ध्यनुत्पादकालसत्त्वादिति दूषणाच्चरमपक्ष एव साधीयानिति द्रष्टव्यम्। अत एव यावज्जीवमनुमिनुयामितीच्छायामपि न यावज्जीवमनुमित्युदयः। तादृशसिसाधयिषायां सत्यामप्यनुमित्युत्पादस्यानुभवासिद्धतयान्तरायकालस्य सिद्ध्यननुगुणान्तरितत्वकल्पनात्। फलबलस्यैव तत्कल्पकत्वादिति। नन्वेवं संशयोत्तरप्रत्यक्षस्थलेऽनुमितिरेव स्यात्, सिसाधयिषाविरहसहकृतसिद्ध्यभावरूपपक्षतापरिपूर्णानुमितिसामग्र्याः परामर्शात्मिकायाः सत्त्वादिति चेद्, न। समानविषयकसिद्धिकरणान्तराभावस्याप्यनुमितिसामग्रीघटकत्वात्। संशयोत्तरप्रत्यक्षे च समानविषयकानुमानातिरिक्तसिद्धिकरणस्य प्रत्यक्षस्यैव सत्त्वान्नानुमितिः। तत्रापि संशयानन्तरमनुमितिरस्त्वितीच्छायामनुमितिदर्शनादनुमित्सोत्तेजिका। तथा चानुमित्साविरहसहकृतानुमानातिरिक्तसाधकमानाभावः पक्षतापदाप्रतिपाद्योऽप्यनुमितिहेतुरिति नातिप्रसङ्ग इति वदन्ति।

---

तत्रेदं शङ्क्यते — तत्रानुमित्सा किमनुमितिगोचरेच्छामात्रम्, उतानुमितित्वप्रकारेच्छा। नाद्यः। सिद्धिर्मेऽस्त्वितीच्छायामपि साधकमानस्थलेऽनुमित्यापत्तेः। उत्तेजिकाया अनुमितिगोचरेच्छायाः सिद्धित्वप्रकारिकायाः सत्त्वात्। नान्त्यः। संशयानन्तरं प्रत्यक्षान्यसिद्धिर्मेऽस्त्वितीच्छायामनुमितिर्न स्यात्। तदि-

च्छाया अनुमितित्वाप्रकारकत्वेनानुत्तेजकत्वात्। न च प्रत्यक्षाविषयकानुमितिविषयकेच्छोत्तेजिका, सा चानुमितित्वप्रकारकेच्छावत् प्रत्यक्षान्यासिद्धित्वप्रकारिकापीति वाच्यम्। तथा सति शाब्दधीसामग्रीसत्त्वे प्रत्यक्षान्येन जानीयामितीच्छायामनुमित्यापत्तेः। अनुमानातिरिक्तासिद्धिसामग्रीमात्रस्य तत्र प्रतिबन्धकतया इष्टापत्तेः कर्तुमशक्यत्वात्। न चानुमितिमात्रविषयकेच्छैवोत्तेजिका, प्रत्यक्षान्येन जानीयामितीच्छा तु अन्यविषयिणीति नोत्तेजिकेति वाच्यम्। एवं सति संशयोत्तरं प्रत्यक्षान्येन जानीयामितीच्छायां शाब्दधीसामग्र्यभावेऽप्यनुमितिर्न स्याद्, अनुमितिमात्रविषयकेच्छाविरहादिति।

अत्र ब्रूमः — प्रत्यक्षसामग्र्यां केवलप्रत्यक्षानिवर्त्यानुमितिविषयकेच्छोत्तेजिका। संशयोत्तरं सिद्धिरस्त्वितीच्छा च केवलप्रत्यक्षेणापि निवर्त्यत इति सा नोत्तेजिका। प्रत्यक्षमनुमितिश्चास्त्वितीच्छा तु केवलप्रत्यक्षानिवर्त्यत्वाद् उत्तेजिकैव। एवं शाब्दसामग्र्यामपि केवलशाब्दानिवर्त्यानुमितिविषयकेच्छोत्तेजिका। तत्तत्सामग्र्यभावश्च प्रत्येकमेव हेतुः, प्रतिबन्धकाभावकूटस्य हेतुत्वेनाननुगमस्य निरासात्। यद्वा, स्वनिवर्तकतापर्याप्त्यधिकरणप्रत्यक्षादिसिद्धिसामग्रीसमवहितानुमित्साभिन्नानुमित्सा सर्वत्रोत्तेजिका। प्रत्यक्षादिसिद्धिसामग्रीकाले सिद्धिरस्त्वितीच्छा न तादृशीति नोत्तेजिका। तदन्यकाले तूत्तेजिकैव। अनुमितित्वप्रकारिका अनुमितिरस्त्वितीच्छा सदोत्तेजिका, प्रत्यक्षादिसिद्धेः स्वनिवर्तकत्वाभावाद् विशिष्टाभावसत्त्वात्। प्रत्यक्षमनुमितिश्चास्त्वितीच्छास्थलेऽपि प्रत्यक्षादेः स्वनिवर्तकतापर्याप्त्यधिकरणत्वाभावाद् विशिष्टाभावोऽस्तीति तत्राप्यनुमितौ न कश्चिद् दोष इति।

इदं त्ववशिष्यते — संशयोत्तरप्रत्यक्षे अन्वयव्यतिरेकाभ्यां विशेषदर्शनवदत्रापि सिद्ध्युत्तरानुमितौ सिसाधयिषा विशेषसामग्र्यस्तु। तत एव सिद्धसाधनस्थले चातिप्रसङ्गाभावात् किं विशिष्टाभावकारणतया, तदपेक्षया विशेषसामग्रीकल्पने लाघवादिति।

अत्र मिश्राः — एवं सति मणिकालीनदाहे उत्तेजकं हेतुरस्त्विति विशिष्टाभावकारणता सर्वत्राप्युच्छिद्येत, युक्तिसाम्यादिति। यदि च मणेः प्रतिबन्ध-

---

१. 'व न.नु' क. पाठः.

कत्वमनुभवासिद्धमिति गुरुरपि विशिष्टाभावः कारणत्वेनाङ्गीक्रियते, तदा प्रकृतेऽपि तुल्यमिति ।

अत्रेदं विचार्यते — एवं सति विशेषादर्शनविशिष्टसंशयाभाव एव प्रत्यक्षे हेतुरस्त्विति तदुत्तरप्रत्यक्षे विशेषदर्शनं हेतुरिति न स्यात्। तथाच विशेषसामग्र्युच्छेदप्रसङ्ग इति समोऽयमनुयोगः। किञ्च, मण्यादिस्थले उत्तेजकानामननुगतत्वान्न विशेषसामग्रीकल्पनं, प्रकृते च सिसाधयिषाहेतुत्वे बाधकाभावात्। यत्तु — सिद्धेः प्रतिबन्धकत्वज्ञानं विना सिसाधयिषायां विशेषकारणता निश्चेतुं न शक्यते, सामान्यसामग्रीत एव कार्यसम्भवात्। प्रतिबन्धकत्वं च कारणीभूताभावप्रतियोगित्वमित्युपजीव्यतयोत्तरकाले तन्न बाध्यते। किन्तु तत्रोत्तेजक(त्व)मात्रं कल्प्यते। एवमप्रामाण्यादिस्थलेऽपीति। तन्न। सिद्धिस्थलीयानुमितौ सिसाधयिषाया अन्वयव्यतिरेकाभ्यामेव हेतुतानिश्चयान्न (तु?) तदर्थं सिद्धिप्रतिबन्धकत्वज्ञानं पूर्व(मु?म)पेक्षितं, येनोपजीव्यविरोधः स्यात्। अस्तु वा तदपेक्षा। उत्तरकालीनलाघवप्रति(ब?स)न्धानेन तत्त्यागे बाधकाभावात्। अन्यथा जितं कार्यान्वितशक्तिवादिनेति। यदपि — सिद्ध्यभावस्यानुमितावहेतुत्वे सिद्धसाधनस्थलेऽनुमित्यापत्तिः। न च सिद्ध्युत्तरानुमितौ सिसाधयिषा हेतुरिति तदभावात् तदभाव इति वाच्यम्। सिद्ध्यनुत्तरानुमितौ तथापि बाधकाभावात् तत्सामग्रीसत्त्वात्। न च सिद्ध्यनुत्तरानुमितौ सिद्ध्यभावः कारणमिति तदभावादेव तदभाव इति वाच्यम्। तथा सति सामग्रीद्वयकल्पने विपरीतगौरवाद् विशिष्टाभाव एव हेतुरस्त्विति नव्यदूषणम्। तदपि न। विशेषदर्शनप्रतिबन्देरनुद्धारात्। अत एव निश्चितार्थसंशये प्रामाण्यसंशयो विशेषसामग्रीति सिद्धान्तः। अन्यथा तत्रापि विशिष्टाभावहेतुतापत्तेरिति ।

अत्रार्वाचीनाः — यत्रोत्तेजकस्य फलं प्रति हेतुत्वं प्रमाणान्तरेण सिद्धमस्ति, तत्र विशेषसाम(ग्र्यै?ग्र्ये)व कल्प्यते। न विशिष्टाभावः, यथा संशयोत्तरप्रत्यक्षे। तत्र गुणत्वेन विशेषदर्शनप्रमायाः संशयोत्तरप्रमां प्रति हेतुत्वकल्पनात्। उत्तरकालेऽपि सिद्धकारणभावस्यैव विशेषदर्शनस्य हेतुत्वं कल्प्यते। यत्र तु नैवं, तत्रानुगततया विशिष्टाभाव एव हेतुः कल्प्यते दाहे मण्यभाव इव। तदत्र सिसाधयिषायाः कथमप्यनुमित्यहेतुत्वाद् विशिष्टाभावो हेतुत्वेन कल्प्यत इति वदन्ति ।

तदपि चिन्त्यं — यद्धर्मावच्छेदेन विशेषं प्रति हेतुता, तद्धर्माश्रयस्य यावतः सिद्धकारणभावत्वं विशेषसामग्रीकल्पने तन्त्रम्, उत यत्किञ्चिदाश्रयस्य सिद्धकारणभावत्वम्। नाद्यः। भ्रमरूपस्य विशेषदर्शनस्य गुणत्वेनाहेतुत्वात्। न च तस्य गुणत्वेनाहेतुत्वेऽपि दोषत्वेनैव हेतुत्वमस्त्विति वाच्यम्। विशेषभ्रमे सत्यपि व्यापकज्ञानस्य विषयाबाधेन प्रमात्वेन तत्र दोषान्तरस्यैव वाच्यत्वात्। नान्त्यः। ईश्वरेच्छाया अपि सिसाधयिषात्वेन तस्याश्चानुमितिं प्रति हेतुत्वकल्पनाद् दुर्वारैव विशेषसामग्रीति।

अत्र ब्रूमः — यत्र कार्येऽवान्तरवैलक्षण्यं तत्रैव विशेषसामग्री, अन्यत्र विशिष्टाभाव इति तद्विभागः। तथा च संशयोत्तरप्रत्यक्षे च विशेषदर्शनप्रयुक्तसावधारणत्वदर्शनाद् विशेषसाम(ग्र्यै? ग्र्ये)व कल्प्यते, पुरुष एवायं न स्थाणुरित्यनुभवात्। सिसाधयिषोत्तरानुमितौ मन्त्रादिस्थलीयदाहादौ च न वैलक्षण्यमस्तीति तत्र सर्वत्र विशिष्टाभाव एव हेतुः। प्रामाण्यसंशयस्थलेऽप्युक्तानुरोधेन विशिष्टाभावस्यैव हेतुता। अन्यथा नियामकान्तराभावेन क्वचिद् विशिष्टाभावः क्वचिद् विशेषसामग्री हेतुरिति वैलक्षण्यानुपपत्तेरिति दिक्।

ननु सिद्ध्यभावस्यानुमितिरूपकार्यकालावृत्तित्वात् कथं हे(तुः? तुत्वं) प्रतिबन्धकाभावस्य कार्यसहभूतस्यैव हेतुत्वात्। अन्यथातिप्रसङ्गादिति चेद्, न। ज्ञानातिरिक्तप्रतिबन्धकाभावस्यैव फलबलेन सहभावेन हेतुताकल्पनादिति केचित्। वस्तुतस्तु — प्रतिबन्धकाभावत्वेन न हेतुतेत्यग्रे वक्ष्यते, किन्तु मण्याद्यभावत्वादिना। तथा च यत्रातिप्रसङ्गः, तत्र सहभावे प्रवेशितेऽपि सर्वत्र तत्प्रवेशे मानाभावः। इतरकारणवत् पूर्वभावमात्रेण कार्योत्पादसम्भवादिति तत्त्वम्।

इदं तु शङ्क्यते — सिद्धेरनुमिति(प्रति)बन्धकत्व एव मानाभावः, प्रत्यक्षादौ सिद्धेस्तदविरोधित्वात्। न चैवमनुमिनोमीत्यनुव्यवसायो न स्याद्, अनुमित्यनन्तरमनुमित्यन्तरसामग्र्या भिन्ने विषये प्रत्यक्षसामग्र्यपेक्षया प्रबलायाः सत्त्वेनानुमित्यन्तरस्यैवोत्पत्तेरिति वाच्यम्। द्वितीयानुमित्यनन्तरमनुमिनोमीत्यनुव्यवसाये बाधकाभावात्। तदा परामर्शरूपकारणाभावेनानुमित्यन्तरसामग्रीविर-

---

१. 'णा', २. 'णा' क. पाठः.

ह्यात् । अत एवानुमितिधाराप्रसङ्गभिया सिद्धिः प्रतिबन्धिकेति निरस्तं, परामर्शाभावादेव तदभावसम्भवात् । न चानुमितिरेव लिङ्गविषयकतया परामर्श इति वाच्यम् । लिङ्गोपहितलैङ्गिकभानस्याग्रे निरस्यत्वादिति कथं पक्षतानुमितिहेतुरिति ।

अत्रोच्यते — एवं सति संशयोत्तरप्रत्यक्षानन्तरं साक्षात्करोमीत्यनुव्यवसायो न स्याद्, न स्याच्च तदनुरोधात् प्रत्यक्षसामग्रीबलवत्त्वकल्पनं, तत्प्रत्यक्षे व्याप्यस्यापि जनकीभूतविशेषदर्शनाविषयस्य विषयतया परामर्शरूपतत्प्रत्यक्षादनुमित्युत्पादस्यैव सम्भवात् । भिन्ने विषयेऽनुमितिसामग्रीबलवत्त्वात् । तस्मात् तत्र सिद्धिसत्त्वान्नानुमितिरिति वाच्यम् । ततस्तदभावोऽवश्यमनुमितिहेतुः । किञ्च, यत्र व्याप्यवत्त्वं पक्षतावच्छेदकं, तत्रानुमितिपरम्परैव स्याद्, नानुमित्यनुव्यवसायः । पक्षतावच्छेदकतया व्याप्यस्यानुमितौ भानेन पूर्वपूर्वानुमितेः परामर्शात्मिकायाः सत्त्वादित्यवश्यं सिद्ध्यभावस्तत्र कारणमिति संक्षेपः ॥

इति पक्षधर्मतावादः ।

---

## अथ परामर्शवादः ।

पक्षधर्मस्य व्याप्तिवैशिष्ट्यधीरनुमितिहेतुः । ननु व्याप्यतावच्छेदकरूपेण व्याप्तिधीस्तेनैव रूपेण पक्षताधीरप्यनुमितिहेतुः । न तु व्याप्तिविशिष्टपक्षधर्मताधीस्तत्र हेतुः । तद्धेतोरिति न्यायेन तज्जनकादुक्तादेवानुमितिसम्भवात् । न च व्याप्तिस्मृतौ धूमत्वरूपोपनायकदर्शने च पक्षधर्मे व्याप्तिवैशिष्ट्यज्ञानमावश्यकमिति तदेव हेतुरिति वाच्यम् । भिन्नविषयेऽनुमितिसामग्र्या बलवत्त्वेन परामर्शोत्पत्तिक्षणेऽनुमितिसामग्रीसत्त्वेनानुमितेरेवोत्पादात् । न च पक्षधर्मे व्याप्यभेदज्ञाने सत्यनुमितिर्नेति तदभेदधीर्हेतुरिति वाच्यम् । धूमत्वरूपव्याप्तिनियतधर्मज्ञाने व्याप्यभेदज्ञानस्यैवासम्भवात् । न च समानप्रकारकज्ञानं विरोधिधीप्रतिबन्धकमिति धूमत्वेन व्याप्तिज्ञानेऽपि तद्धूमत्वेन तदभावज्ञानमस्त्विति वाच्यम् । यद्धर्मावच्छेदेन यन्निश्चयः, तद्घटितधर्मप्रकारकतद्व्यतिरेकज्ञानस्यासम्भवात् । अन्यथा घटत्वावच्छिन्नं द्रव्यमिति ज्ञाने सत्ययं नीलघटो द्रव्यं न वेति ज्ञाना-

पत्तेः । भवतु वा व्याप्यपक्षधर्मयोर्भेदाग्रहोऽप्यनुमितिहेतुः, अभेदज्ञानजनकत्वेन तस्यावश्यकत्वात् तत एवानुमित्युत्पत्तावन्तराभेदज्ञानकल्पनायां गौरवात् । न च भेदग्रहस्यानुमितौ प्रतिबन्धकतायामभेदज्ञानस्य तत्र हेतुत्वमावश्यकं, जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वादिति वाच्यम् । तथा सति परामर्शे भेदधीः प्रतिबन्धिका न स्यात्, तत्राभेदधीहेतुत्वस्य त्वयाप्यनभ्युपगमाद्, व्याप्तौ विशेषणान्तरप्रवेशे त्वप्रयोजकत्वादिति ।

अत्र मणिकृतः — अयमालोको वा धूमो वा । उभयथापि वह्निव्याप्य इति ज्ञानादनुमितिर्न स्याद्, धूमत्वालोकत्वयोर्व्याप्यतावच्छेदकयोः पक्षधर्मवृत्तितयानिर्णयात् । व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिर्णयस्य च त्वया हेतुत्वाङ्गीकारात् । धूमालोकान्यान्यत्वस्य च गौरवेण व्याप्यतानवच्छेदकत्वात् । किञ्च, वह्निव्याप्यवानयमित्यादिशाब्दपरामर्शादनुमितिर्न स्याद्, व्याप्यतावच्छेदकस्य धूमत्वस्यानिर्णयात् । अपि च यत्र स्मृतेर्धूमत्वव्याप्ती युगपत् पक्षधर्मे भासेते । तत्रास्ति व्याप्यत्वप्रकारकत्वम् । अस्ति च व्याप्यतावच्छेदकप्रकारकत्वम् । तत्र व्याप्यत्वप्रकारकपक्षधर्मताज्ञानत्वेन हेतुता कल्प्यते, लाघवात् । न तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन, गौरवादिति ।

अत्र वदन्ति — व्याप्तिनियतधर्मावच्छिन्नपक्षधर्मताज्ञानत्वेन हेतुता, व्याप्तिनियतं च धूमालोकान्यान्यत्वमपि भवत्येवेति तेन रूपेण ज्ञातेऽप्यनुमितिरिति न कश्चिद् दोषः । अत एव व्याप्यवानित्यत्राप्यनुमितिरविकलैव, व्याप्तेरेव व्याप्तिनियतत्वात् । न चैतदपेक्षया व्याप्त्यवच्छिन्नपक्षधर्मताज्ञानत्वमेव लाघवादवच्छेदकमस्त्विति वाच्यम् । उक्तापेक्षया तस्य विशेषत्वात् । गुरुण्यपि सामान्ये प्रमाणपक्षपातात् । कथमन्यथा घटत्वादिजातिसत्त्वेऽपि कर्तृजन्यतावच्छेदकं कार्यत्वमेवाङ्गीक्रियत इति ।

अत्राहुः — सामान्यविशेषयोस्तुल्यशरीरत्व एव सामान्यं विशेषापेक्षया लघु, यथा पृथिवीत्वापेक्षया द्रव्यत्वम् । इह तु सामान्यस्य विशेषापेक्षया गुरुशरीरत्वान्न तेन रूपेण हेतुत्वम् । अत एवाख्यातवाच्यतावच्छेदकं न व्यापारत्वं, किन्तु यत्नत्वमेवेति सिद्धान्तः । कर्तृजन्यतायां तु घटत्वादेरवच्छेदकत्वं न विशेषत्वात् त्यज्यते, किन्तु बहुत्वगौरवेण । तस्माद् व्याप्यत्वप्रकारकपक्षधर्मता-

ज्ञानत्वेनैव हेतुता, न तु तन्नियतधर्मप्रकारकपक्षधर्मताज्ञानत्वेनेति पक्षधरचरणाः ।

वस्तुतस्तु — नीलधूमत्वादेरपि व्याप्त्यनतिप्रसक्तत्वरूपव्याप्तिनियतत्वसत्त्वात् तत्प्रकारकज्ञानादप्यनुमितिः स्यात् । तथा च व्यर्थतादोष इव न स्यात् । न च तादृशलघुधर्माघटितत्वमपि नियतत्वघटकम् । तथा सति व्याप्यतावच्छेदकप्रकारकज्ञानस्यैव हेतुतागमनाद्, अनतिप्रसक्तत्वे सति तादृशलघुधर्माघटितस्यैवावच्छेदकपदार्थत्वात् । तथा च धूमालोकान्यान्यत्वेन पक्षधर्मताज्ञानेऽनुमितिर्न स्यादिति मणिकृद्दूषणं वज्रलेपायितम् । किञ्च, व्याप्तिनियतत्वेन ज्ञायमानधर्मप्रकारकत्वमतिप्रसङ्गभीत्या वाच्यम् । तथा चातिगौरवमननुभवश्च । नहि धूमो वह्निव्याप्य इति ज्ञाने सति धूमत्वस्य वह्निव्याप्तिव्याप्यत्वाज्ञानेऽनुमितिर्न भवति। धूमस्य वह्निव्याप्तिग्रहसामग्रीतो धूमत्वस्य वह्निव्याप्तिव्याप्यत्वज्ञानसामग्र्या भिन्नत्वादिति सिद्धं लाघवादनतिप्रसङ्गाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानस्यानुमितिहेतुत्वमिति ।

ननु व्याप्तिवैशिष्ट्यं पक्षधर्मे बोद्धुमशक्यं, पक्षीयसाध्यासन्निकर्षेण तन्नियतसामानाधिकरण्यात्मकव्याप्तेरिन्द्रियेणाग्रहात् । न च व्याप्तेरुपनीतभानमपि, पूर्वमज्ञानादिति चेद्, न । महानसीयधूमवह्निसहचारदर्शनादिना व्याप्तेः प्रागेव धूमत्वपुरस्कारेण ग्रहणात् पक्षधर्मधूमे धूमत्वदर्शनानन्तरं तदुपनयात् । यद्धर्मावच्छेदेन यद्धर्मग्रहः, तद्धर्मग्रहस्य तदुपनाय(क)त्वात् । विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहरूपविशिष्टप्रत्यक्षसामग्र्याश्चाविकलत्वात् । न च व्याप्तिरूपविशेषणं न ज्ञातमिति वाच्यम् । व्याप्तेरेकतया महानसीयवह्निधूमग्रहादेव पूर्वं ग्रहणादिदानीं च तत्स्मरणानन्तरं पक्षधर्मधूमे तद्विशिष्टज्ञाने बाधकाभावादिति मणिकृतः ।

अत्र वदन्ति — व्याप्तिः सामानाधिकरण्यात्मिका । सा च प्रत्येकं भिन्नेति पर्वतीयवह्निधूमसामानाधिकरण्यस्य प्रागज्ञानेन कथं तस्योपनयः ? न च सामानाधिकरण्यावच्छेदकरूपवत्त्वं परम्परासम्बन्धेन व्यधिकरणसामानाधिकरण्यमपि व्याप्तिः, तस्य च प्रागपि ज्ञानादुपनय इति वाच्यम् । सामानाधिकरण्यज्ञानस्यैव तदुभयापेक्षया लघुत्वेन हेतुत्वात् । न च तज्ज्ञानासम्भवः । विशिष्याज्ञानेऽपि धूम-

वह्निसामानाधिकरण्यत्वेन ज्ञानस्य प्राक् सम्भवादिति महानसीयधूमपर्वतीयधूमयो- रैक्यव्याप्तिपक्षोऽनुपपन्न इति ।

अत्रोच्यते — व्यर्थविशेषणताहेत्वाभासतया अवच्छेदकलक्षणव्याप्तिपक्ष एवोपपत्तेस्तदनुरोधात् तज्ज्ञानमेवानुमितिहेतुरिति वाच्यम् । तथा च तदभिप्रायेणै- कैव हि सा व्याप्तिरिति मणिः । यद्वा, एकैव व्याप्तिरित्यस्य महानसीयधूमव्या- प्त्या पर्वतीयधूमव्याप्तेरैक्यमिति नार्थः, किन्तु पूर्वानुभूतेदानीमनुभूयमानयोरै- क्यम् । महानसीयधूमव्याप्तिग्रहस्थले धूमव्याप्तित्वेन पर्वतीयधूमव्याप्तेरपि ग्रहात् तदुपनये बाधकाभाव इति ।

केचित् तु — व्याप्त्या सह ज्ञानं न प्रत्यासत्तिः, प्रत्यभिज्ञानाभिन्नगुणप्रत्यक्षे संयुक्तसमवायस्यैव प्रत्यासत्तितया ज्ञानस्यानासत्तित्वात्, किन्तु पर्वतधूमसंयोग- रूपव्याप्त्या सह संयुक्तसमवाय एव प्रत्यासत्तिरिति वदन्ति । तत्तु चिन्त्यम् । गुणाभावप्रत्यक्षे संयुक्तसमवायं विनापि गुणस्य भानेन त्वदुक्तनियमस्य व्यभिचा- रात् । न च तद्भिन्नत्वमपि विशेषणम् । सामान्यलक्षणादिजन्यप्रत्यक्षे तथापि व्यभि- चारात् । न चासत्त्यन्तराभावे सत्येव ज्ञानस्यासत्तित्वमितीह संयुक्तसमवायसत्त्वा- न्न तदासत्तिरिति वाच्यम् । आसत्त्यन्तराभावस्थले ज्ञानस्यासत्तिता कल्प्यते । तत्र चासत्त्यन्तराभावस्य गौरवेणासत्तितावच्छेदकता न कल्प्यते । मानाभावात् । तस्मादिह ज्ञानं संयुक्तसमवायश्चोभयमपि प्रत्यासत्तिरिति ।

इदं त्ववधेयम् — विशिष्टसामानाधिकरण्या(त्मि ? त्म)कव्याप्त्या सह ज्ञा- नमेवासत्तिः, तावदंशे संयुक्तसमवायासम्भवात् । तदेकदेशेन संयोगेन सहोभय- मपीति । यत्तु विशेषणसन्निकर्षः कारणमेव नेति किं व्याप्तिसन्निकर्षेणेति । तन्न । घटसन्निकर्षे सति पटप्रत्यक्षापत्त्या तत्प्रत्यक्षे तदिन्द्रियसन्निकर्षहेतुतासिद्धौ विशेषणसन्निकर्षस्यापि हेतुतासिद्धिरित्युक्तं प्रत्यक्षमणिसार इति दिक् ।

इदं तु विचार्यते — यथा धूमत्वावच्छेदेन व्याप्तिनिर्णयात् पक्षधर्मे धूम- त्वनिर्णयोपनीतव्याप्तिभानं, तथा धूमवत्त्वावच्छेदेन वह्निमत्त्वनिर्णयात् पर्वते धूम- वत्त्वनिर्णयानन्तरं प्रत्यक्षमेवास्तु, समानविषये प्रत्यक्षसामग्रीबलवत्त्वस्य सर्वाभ्यु- पग(म ? त)त्वादिति ।

अत्र केचित् — पर्वते वह्निप्रत्यक्षं लौकिकं न सम्भवति, लौकिकद्रव्यप्र- त्यक्षे इन्द्रियसंयोगस्य हेतुत्वाद्, वह्नेश्चासंयुक्तत्वात् । नाप्यलौकिकम् । तथा सति नियतलिङ्गपरामर्शापेक्षा न स्यात् । उपनीतभानान्तरवदुपपत्तेः ।

किञ्च, मानान्तरविलयापत्त्या सर्वत्रोपनीतभानप्रत्यक्षसामग्री दुर्बलेति कल्प्यम्। तथा च कथं प्रत्यक्षमिति समादधते।

तत्र शङ्क्यते—उपनीतवह्निप्रत्यक्षमस्तु। अस्तु च परामर्शापेक्षा। उपनायकधर्मज्ञानस्योपनीतभानेऽपेक्षितत्वात्। व्याप्यवत्त्वस्य चोपनायकत्वात्। न च धूमवत्त्वावच्छेदेन वह्निमत्त्वग्रहणात् तन्मात्रज्ञानमपेक्ष्यतां, न तु व्याप्त्युपनयपर्यन्तमिति तात्पर्यमिति वाच्यम्। प्रत्यक्षत्वाविशेषेऽपि चाक्षुषादिप्रत्यक्षे तत्तच्चक्षुराद्यसाधारणापेक्षावदनुमितिरूप उपनीतप्रत्यक्षे तृतीयलिङ्गपरामर्शापेक्षायां दोषाभावात्। पक्षधर्मधूमे धूमत्वज्ञानमात्रमपेक्षितं, न तु व्याप्त्युपनय इति वदन्तं प्रत्युक्तापादनस्येष्टापत्तिपराहतत्वाच्च। यच्च किञ्चेत्युक्तं, तदपि न। उपनीतभानेनान्यथासिद्धिमापादयतो मानान्तरविलोपस्येष्टत्वात्। किञ्च, उपनीतभानसामग्र्या इतरज्ञानसामग्र्यपेक्षया दुर्बलत्वे संशयानन्तरं भ्रमरूपविशेषदर्शने सति भ्रमरूपव्यापकप्रत्यक्षं न स्याद्, अनुमितिसामग्रीसत्त्वात्। न च दोषाघटितोपनीतप्रत्यक्षसामग्र्यपेक्षयानुमित्यादिसामग्री बलवतीति वाच्यम्। तथा सति भ्रमानुमितिः क्वापि न स्याद्, दोषघटितोपनीतप्रत्यक्षसामग्र्या एव तत्र सत्त्वात्। यदपि समाहितमुपनीतप्रत्यक्षाङ्गीकारे धूमवान् वह्निमानित्यनुमितिरेव स्यान्न तु पर्वतो वह्निमानिति, उपनायकधर्मावच्छिन्नत्वेनैव ज्ञाते धर्मिण्युपनीतप्रत्यक्षसामग्र्याः सत्त्वादिति। तदपि न। उपनायकधर्मविशिष्टे धर्मिण्युपनयो न तु तद्विशिष्ट एव, गौरवादिति पर्वतत्वभानसामग्र्या तद्भानमपि स्यादेव। किञ्चैवमिदं चन्दनं सुरभीत्युपनीतं प्रत्यक्षं न स्याद्, इदन्त्वावच्छेदेन सौरभ्याज्ञानादिति।

अत्र नव्याः—वह्निमनुमिनोमीत्यनुव्यवसायेनानुमितित्वजातिः सिद्धा। सा च न मानसत्वव्याप्या। तथा सति साक्षात्करोमीति तदाकारापत्तेः। वह्निं न साक्षात्करोमि किन्त्वनुमिनोमीति तदाकारविरोधाच्च। तथा चानुमितिरूपविलक्षणज्ञानसिद्धावुपनीतप्रत्यक्षसामग्र्यास्तत्सामग्र्यपेक्षया दौर्बल्यं कल्प्यमिति। न चैवं सति प्रागुक्तदोषः। प्रत्यक्षमात्रप्रयोजकदोषाघटितोपनीतभानसामग्र्या अनुमित्यादिसामग्र्यपेक्षया दुर्बलत्वात्। संशयोत्तरभ्रमे च प्रत्यक्षस्यानुभूयमानतया तन्मात्रप्रयोजकदोषघटितैव सामग्रीति नानुपपत्तिः। अत एव न भ्रमानुमित्युच्छेदोऽपि, तत्रानुमितेरनुभूयमानतया प्रत्यक्षमात्रप्रयोजकदोषाघटिततया तादृशोपनीतभानसामग्र्या दुर्बलत्वाद्, दोषस्य फलबलकल्प्यत्वादिति वदन्ति।

तच्चिन्त्यम् । उपनीतवह्निप्रत्यक्षे साक्षात्त्वजातिसत्त्वेऽपि तदभिव्यक्तेर्लौकिकसन्निकर्षजन्यज्ञानस्थल एव भावेन तत्राभावात् । अन्यथोपनीतपरमाणुज्ञानानन्तरं (तत् ? तं) साक्षात्करोमीति प्रत्ययापत्तेः । अत एव वह्निं न पश्यामीति धीरपि परमाणुं न पश्यामीति प्रतीतिवल्लौकिकत्वाभावमवगाहते । प्रत्यक्षसामग्रीसत्त्वेन तदुत्पत्तिसिद्धौ तथा कल्पनादिति न किञ्चिदेतत् । यदपि कश्चिदवोचद् — अनुमिनोमीत्यनुव्यवसायानुगमात् पक्षतादिजन्यतावच्छेदकतया च सिद्धानुमितित्वजातिरेकैव । सा च न साक्षात्त्वव्याप्या, चाक्षुषत्वादिना परापरभावानुपपत्तेः । न च तद्व्याप्यमानसत्वव्याप्या । प्रमाणान्तरासहकृतमनोजन्यत्वस्य मानसत्वप्रयोजकत्वाद्, अत्र च व्याप्तिज्ञानरूपप्रमाणान्तरसहकारादतथात्वात् । तस्मादनन्यगत्यैवानुमितिः प्रत्यक्षविलक्षणाङ्गीकार्येति सिद्धमनुमानप्रामाण्यमिति । तदपि न भव्यम् । सन्निकृष्टमनोजन्यत्वस्यैव मानसत्वप्रयोजकत्वात् । तस्य ज्ञानरूपसान्निकर्षेण प्रकृतेऽपि सम्भवात् । अनुमितौ मनस एव प्रमाणतया व्याप्तिज्ञानस्य प्रमाणत्वाभावेन प्रमाणान्तरासहकृतमनोजन्यत्वस्यापि सत्त्वाच्च ।

अपरे तु — अनुमिनोमीत्यनुव्यवसाया(द)नुमितित्वजातिः सिध्यति । सा चानुभवत्वव्याप्यैव साक्षात् । न त्वनुभवत्वव्याप्यप्रत्यक्षत्वव्याप्यमानसत्वव्याप्या, गौरवादिति पृथक् प्रमाणमनुमानमिति । तन्न । एवं सत्यर्थापयामीत्यनुव्यवसायादर्थापत्तित्वजातिः सिद्धा, तस्याश्च साक्षादनुभवत्वव्याप्यत्वापत्त्यार्थापत्तेरपि प्रमाणान्तरत्वप्रसङ्गात् । अनुमितिसामग्रीजन्यत्वेनानुमितित्वमर्थापत्तेर्यदि, तदा प्रत्यक्षसामग्रीजन्यत्वेनानुमितेरपि तत्त्वमवर्जनीयमिति । यत्तु — सिद्धिरनुमितौ प्रतिबन्धिकैवं सति न स्याद्, धारा(वगा ? वा)हिकप्रत्यक्षानुरोधेन प्रत्यक्षे सिद्धिप्रतिबन्धकत्वानङ्गीकारादिति । तन्न । अनुमितित्वावच्छेदेनैव सिद्धेः प्रतिबन्धकत्वात्, प्रत्यक्षान्तरे तत्प्रतिबन्धकत्वे मानाभावादित्युपनीतप्रत्यक्षेणान्यथासिद्धमनुमानं न पृथक् प्रमाणमिति ।

अत्रोच्यते — यद्व्यापकतया हेत्वभावो गृहीतः, हेतुना तदभावोऽप्रसिद्ध एव सिध्यतीत्यप्रसिद्धसाध्यकव्यतिरेकिस्थले साध्यस्य पूर्वाज्ञाततयोपनीतभानसामग्रीविरहादनुमानस्य पृथक्प्रामाण्यमित्यन्यत्राप्यनुमिनोमीत्यनुव्यवसायादुपनीतसामग्र्या दुर्बलत्वं कल्प्यत इति पर्वतादावपि न वह्न्यनुमितिदुर्भिक्षम् । किञ्च, अनुमितेरुपनीतान्तरवैलक्षण्यमुभयसिद्धम् । अन्यथा परामर्शाद्यनपेक्षापत्तेः ।

तथा च ज्ञानरूपोपनीतान्तरप्रत्यक्षसामग्र्या तादृशं प्रत्यक्षं कुतो न स्याद्, यद्यनुमितिसामग्री तत्र न प्रतिबन्धिका। न चास्तु तादृशोपनीतप्रत्यक्षे उपनीतप्रत्यक्षविशेषरूपानुमितिसामग्र्याः प्रतिबन्धकत्वमिति वाच्यम्। अनुमितिसामग्रीप्रतिबन्ध्यतावच्छेदकतया तत्रोपनीतप्रत्यक्षत्वस्यैव कल्पनाद्, न त्वनुमितिभिन्नोपनीतप्रत्यक्षत्वस्य, गौरवात्। तद्बलाच्चानुमितेः प्रत्यक्षभिन्नत्वमपि कल्प्यते। अत एवानुमितित्वजातेरनुभवत्वसाक्षाद्व्याप्यत्वकल्पनापेक्षया तद्व्याप्यप्रत्यक्षत्वव्याप्यमानसत्वव्याप्यताकल्पनागौरवमपि न भवति। अत एव च वह्निं न साक्षात्करोमीत्यस्य न लौकिकप्रत्यक्षत्वाभावविषयत्वकल्पना, सामान्याभावविषयत्वेनोपपत्तेः। अनुमितेः प्रत्यक्षवैलक्षण्यस्योक्तयुक्त्या साधितत्वादिति दिक्।

ननु तथापि व्यापकत्वपरामर्शापेक्षया व्याप्यत्वपरामर्शस्यानुमितिहेतुत्वे किं विनिगमकं, प्रत्युत व्याप्यत्वे सामानाधिकरण्यभागस्याधिकस्य प्रवेशेन गौरवम्। न चैवं पर्वतवृत्तिधूमव्यापको वह्निरिति परामर्शाकारः स्यात्। तथा च तत्रोपसर्जनीभूतस्य पर्वतस्यानुमितौ विशेष्यता न स्याद्, जनकज्ञानोपसर्जनीभूतस्य जन्यज्ञानेऽपि तथात्वादिति वाच्यम्। भूतले घटाभाव इति ज्ञानजन्ये घटाभाववद् भूतलमिति ज्ञाने व्यभिचारेणोक्तव्याप्तेरभावात्। परामर्शस्वभावादेवानुमितेः पक्षविशेष्यकत्वोपपत्तेः।

अत्र मिश्राः—पर्वतवृत्तिधूमव्यापकत्वं वह्नौ तदा ज्ञातुं न शक्यते, वह्नेर्विशेष्यस्य लौकिकसन्निकर्षाभावेन बहिरिन्द्रियाप्रवृत्तेः। मनसश्च बहिरर्थे स्वातन्त्र्याभावात्। न च ज्ञानान्तरोपनीतपर्वतीयधूमव्यापकत्वं मनसा ग्राह्यमिति नास्वातन्त्र्यमिति वाच्यम्। यदि पर्वतीयधूमव्यापकत्वं स्मृतं सद् वह्नावुपनेयं, तदा तस्यापि वह्निवदनुमितिविषयतापत्तौ सर्वत्र तस्याः समूहालम्बनत्वापातात्। किञ्च, साध्यसामानाधिकरण्यं व्यापकत्वेऽपि प्रवेश्यमेव। अन्यथाकाशस्यापि व्यापकतापातात्। धूमवन्निष्ठाभावस्य प्रतियोग्यसमानदेशस्य घटाभावादेरप्रतियोगित्वादाकाशस्य। आकाशाभावस्य प्रतियोगिदेशाप्रसिद्ध्या समानदेशत्वाभावात्। तस्मादनियमादुभयपरामर्शो हेतुरिति वदन्ति।

तत् तु विचार्यम्। पर्वतीयधूमव्यापकत्वमुपनीयतां स्मृत्या। न चैतावता तद्धर्मिणोऽप्युपनयनियमः, येन तस्यानुमितौ भाने समूहालम्बनत्वं स्यात्। न चैकानुभव एव विशिष्टसंस्कारद्वारा विशिष्टस्मारक इति वाच्यम्।

कुण्डलादिविशिष्टदेवदत्तानुभवे सति विशेषणसंस्कारानुद्बोधवदुपपत्तेः । प्रमुष्टत-त्ताकस्मृतिवदुपपत्तेश्च । गृह्यतां वा पर्वतीयधूमव्यापकं तद्रूपादेः(?)। न चैतावता तस्यानुमितिविषयतास्ति । तेषां प्रत्यक्षसिद्धतया सिद्धसाधनेनानुमित्युदयायोगात् । अस्तु वा प्रत्येकं स्मृतानां पदार्थानां वह्नौ धूमव्यापकत्वं धूमे च पक्षवृत्तित्व-मिति विशेष्ये विशेषणमिति न्यायावताराद् ग्रहणमिति । यच्च किञ्चेत्युक्तं, तदपि न । आकाशस्य व्यापकत्वेऽपि क्षत्यभावः । बाधादेव तदननुमितेः । वस्तुतो व्यापकत्वमेव न, स्वप्रतियोगिसमानदेशभिन्नत्वस्याकाशाभावेऽपि स-त्त्वात् । स्वोपादानेत्यादौ (?) तथैव स्वीकारात् । भवतु वाकाशव्यावृत्त्यर्थं साधि-करणत्वं विशेषणम् । तावतापि व्याप्यत्वापेक्षया लाघवमागतमेवेति ।

उपाध्यायास्तु — साध्याप्रतियोगिकसमानाधिकरणाभावकत्वमेव व्याप्य-त्वमस्तु, तथा चात्रापि सामानाधिकरण्याप्रवेशान्न तदपेक्षया व्यापकत्वं लघ्विति न तद्धीर्हेतुः । किञ्च, कारणीभूतज्ञाने यावद्विषयकतया हेतुत्वं, तत्रोपसर्जनतया भातस्य कार्यभूतज्ञानेऽपि तथात्वमिति नियमः । भूतले घटाभाव इत्यादौ घटाभावादिविषयकत्वेन हेतुत्वान्न व्यभिचारः । तथा च व्यापकत्वपरा-मर्शहेतुतापक्षे पक्षविशेष्यकानुमितिर्न स्यादिति व्याप्यत्वपरामर्शो हेतुरित्याहुः ।

अत्र मिश्राः — व्याप्यत्वे सामानाधिकरण्याप्रवेशेऽपि व्यापकत्वापेक्षया विनिगमकमप्राप्तमेव । किञ्च, व्याप्यत्वे साध्याप्रतियोगिकसमानाधिकरणयावद-भावकत्वं प्रवेश्यम् । अन्यथा व्यभिचारिण्यतिव्याप्त्यापातात् । स्वसमानाधिकर-णाभावाप्रतियोगित्वस्य सामान्याभावरूपस्य प्रवेशान्न तत्साधारण्यमिति न या-वत्प्रवेश इति व्यापकत्वमेव लघ्विति तद्धीरेव हेतुरिति । यच्च जनकेत्यादिव्या-प्त्या पक्षविशेष्यकत्वं न स्यादित्युक्तं, तदपि न । भूतले घटाभाव इत्यादिज्ञानज-न्यज्ञानवद् विशेषणविशेष्याभावोपपत्तावुक्तव्याप्तेरप्रयोजकत्वादिति वदन्ति । (य?अ)-त्र यद्यपि व्यापकत्वेऽपि यावत्त्वं प्रवेश्यमेव, अन्यथा हेतुसमानाधिकरणघटाभावप्र-तियोगित्वसामान्याभावस्य व्यभिचारिण्यपि सत्त्वेनातिव्याप्त्यापातात् । तथा च व्यापकत्वे क्व लाघवम् । तथापि विनिगमनाविरह एव तात्पर्यम् । वस्तुतो भवतु सामानाधिकरण्याविशेषिता व्याप्तिः, तथापि सामानाधिकरण्यगर्भव्याप्तिधीहे-तुत्वसिद्धान्तो गत एवेति तात्पर्यम् । तस्माद् व्याप्यत्वापेक्षया सामानाधिकर-ण्यागर्भत्वेन व्यापकत्वं लघ्विति तद्धीरेव हेतुरस्तु ।

अत्रोच्यते — सामानाधिकरण्यसंशये तद्व्यतिरेकनिश्चये च सति नानुमितिरित्यनुभवसिद्धम् । तथा च यत्संशयेत्यादिव्याप्त्या तद्धीरेव हेतुः । अत एव विरुद्धो हेत्वाभासः । अन्यथा जनकीभूतज्ञानाविरोधितया तस्याप्रतिबन्धकतापत्तेः । न च विरुद्धत्वेनाव्यभिचारज्ञानविघटनम् । ग्राह्याभावानवगाहित्वात् । न च विरुद्धत्वेन व्यभिचारानुमानम् । व्याप्तिज्ञानदशायां तदभावेनानुमित्यप्रतिबन्धापत्त्या प्रतिबन्धनियमघटितहेत्वाभासतानुपपत्तेः । एवं व्यभिचारधीप्रतिबन्धकत्वानुरोधादव्यभिचारांशधीरपि हेतुरित्यव्यभिचरितसामानाधिकरण्यधीहेतुत्वसिद्धिरिति ।

गौडास्तु — सामानाधिकरण्यग्रहविषयीभूतसाध्यसम्बन्धस्यैवानुमितौ भानात् तद्धीरवश्यं हेतुः, न व्यापकताधीमात्रम् । तथा सत्यनुमितौ साध्यसम्बन्धभाने नियमाभावेन सम्बन्धान्तरेण सामानाधिकरण्यज्ञाने सम्बन्धान्तरेण साध्यभानापातात् । न च यत्सम्बन्धेनाव्यभिचारग्रहः, तत्सम्बन्धेनानुमितौ साध्यभानमिति वाच्यम् । सम्बन्धद्वयेनाव्यभिचारग्रहेऽपि सामानाधिकरण्यविषयीभूतसम्बन्धस्यैव भानादिति वदन्ति ।

तच्चिन्त्यम् । सम्बन्धद्वयेन सामानाधिकरण्यद्वयग्रहस्थले सम्बन्धद्वयस्याप्यनुमितौ भानापातात् । तत्र चेष्टापादने अव्यभिचारधीविषयसम्बन्धद्वयस्यापि भाने तथात्वस्य वक्तुं शक्यत्वादिति संक्षेपः ।

इति परामर्शवादः ।

---

## अथ लिङ्गकरणतावादः ।

अनुमितौ च लिङ्गपरामर्शः करणं, न तु परामृश्यमानलिङ्गम् । न च परामर्शमात्रं न हेतुः, किन्तु लिङ्गपरामर्श एव । तथा च विशिष्टकारणताग्राहकस्य विशेषणेऽपि कारणताग्राहकत्वम् । कथमन्यथा दण्डसंयोगहेतुतासिद्धिरिति वाच्यम् । तत्र हि दण्डं विना संयोगासत्त्वादुभयोरपि विनिगमनाविरहाद्धेतुत्वमुपपद्यते । ज्ञानविद्यमानता न विषयविद्यमानतानियता, येनात्रापि तथा सम्भाव्येत । अतीतादिलिङ्गज्ञानादप्यनुमितेः । न च तत्रापि लिङ्गध्वंसादिरपि व्याप्य एवेति स एव हेतुः । तस्याज्ञानात् । ज्ञातस्य च धूमस्यासत्त्वात् । अत एव धूमात्यन्ताभा-

वात्यन्ताभावत्वमेव त्रितयसाधारणं व्याप्यतावच्छेदकमिति निरस्तम् । धूमत्वप्रकारकज्ञानादनुमित्यनुत्पादापातात् । किञ्च, यत्र पर्वते धूमभ्रमाद् वह्निभ्रमः, तत्र व्याप्यं किमपि नास्तीति कथं तस्यानुमितिहेतुता । तथा च तत्र परामर्शस्य हेतुत्वात् तत्सत्यत्वादेव प्रमानुमित्युपपत्तेर्न यत्किञ्चिद्व्याप्यस्य प्रमानुमितौ गुणत्वेनापि हेतुत्वकल्पनम् । किं बहुना, यत्र भाविसृष्ट्यभावः सर्वमुक्त्यानुमीयते, तत्र भाविव्यातिरिक्तव्याप्याभावेनानुमितिर्न प्रमा स्यादिति लिङ्गकरणतापक्षो न क्षोदक्षम इत्युपेक्ष्यते । नन्वनुमितौ परामर्शश्चरमकारणतया निर्व्यापार इति न करणं, करणान्तरं च नास्त्येवेति कथमनुमानं प्रमाणमिति चेद्, न । व्याप्तिज्ञानस्य परामर्शव्यापारकस्यानुमितिकरणत्वादिति मणिकृतः ।

अत्र वदन्ति — पर्वतवृत्तिधूमे वह्निव्याप्तिरिति परामर्शे व्याप्तिविशेष्यके व्याप्तिज्ञानं न हेतुरिति तज्जन्यानुमितौ व्याप्तिज्ञानस्य व्यभिचारः । किञ्च, विशकलितव्यभिचाराभावसहचारदर्शनयोः सत्त्वे पर्वतीयधूमे वह्निसामानाधिकरण्यं वह्नौ धूमसमानाधिकरणभावाप्रतियोगित्वं च विशेष्ये विशेषणमिति न्यायेन यत्र गृहीत्वा परामर्श उत्पद्यते, तत्र परामर्शपूर्वं व्याप्तिज्ञानं नेति व्यभिचारः । अपि च, स्मृतिरूपपरामर्शादनुमितौ व्याप्तिज्ञानं व्यवहितत्वान्न हेतुः, संस्कारस्यानुमित्यहेतुतया तद्वाराव्यवधानस्यासम्भवात् । किं बहुना, व्याप्तिज्ञानहेतुत्व एव मानाभावः, परामर्श एव जनकत्वादन्यथासिद्धेः । न चानुमितेः सकरणत्वानुरोधात् तद्धीहेतुताकल्पनम् । पक्षधर्मताज्ञानादेरेव करणादनुमित्युपपत्तेरिति ।

अत्राहुः — व्याप्तिपक्षधर्मतादेः सर्वस्यापि ज्ञानमनुमितौ करणम् । तच्च न प्रत्येकम्, अननुगमात् । किन्तु, परामर्शजनकज्ञानत्वेन । तथा च यदेव यत्र परामर्शजनकीभूतं ज्ञानं, तदेव तत्र करणमिति न व्यभिचारः । न चानेन रूपेण हेतुत्वेऽन्यं प्रतीत्यन्यथासिद्धिरिति वाच्यम् । अन्यमित्यस्य व्यापारान्यमित्यर्थस्य बहुशो निवेदितत्वात् । अन्यथा दण्डत्वस्य हस्तादिसाधारण(स्य?)चक्रभ्रमिजनकत्वातिरिक्तस्य निर्वक्तुमशक्यतया तत्राप्यन्यथासिद्ध्यापत्तेः । यत्तु — तत्रापि चक्रभ्रमिजनकता येन रूपेण, तेनैव घटजनकताप्यस्तु । सा च न चक्रभ्रमिजनकत्वेन, आत्माश्रयादित्यन्यदेव तज्जनकतावच्छेदकमङ्गीकार्यमित्यन्यमित्यत्र व्यापारान्यत्वार्थत्वे मानाभाव इति । तन्न । भ्रमिं प्रत्यननुगतरूपेण विशेषतो हेतुत्वेऽपि घटत्वावच्छिन्नकार्यं प्रति भ्रमिजनकत्वेनानुगमे दोषाभावात् । न च स्मृतिरूपपरामर्शस्थले किं

ज्ञानं करणमिति वाच्यम् । पूर्वानुभवस्यैव तत्र करणत्वात् । न च संस्कारव्यवहितः स इति वाच्यम् । संस्कारद्वारा परामर्शं प्रति परामर्शद्वारा चानुमितिं प्रत्यव्यवधानात् । अस्तु वा परामर्शजनकत्वेनैव हेतुता, न तु ज्ञानत्वान्तर्भावः । तथा च संस्कार एव तत्र कारणम् । न च तज्जन्यत्वे स्मृतित्वापत्तिः । तत्त्वेन जन्यत्वस्यैव स्मृतित्वप्रयोजकत्वात् । अन्यथा तद्ध्वंसेऽतिप्रसङ्गात् । न चैवं परामर्शजनकस्य कालादेरपि करणत्वापातः । इष्टत्वात् ।

केचित् तु — व्याप्तिज्ञानत्वेन लाघवात् करणत्वे निश्चिते व्याप्तिविशेष्यकपरामर्शादेर्नानुमितिरित्येव कल्प्यत इति वदन्ति । तच्चिन्त्यम् । पक्षधर्मताज्ञानत्वादिनापि करणत्वे लाघवतौल्यात् । तस्माद् विनिगमनाविरहात् सर्वेषां करणत्वमित्युक्तक्रमेणैवानुगम इति तत्त्वम् । अत एवानुमितेः क्रियात्वेन करणजन्यत्वानुमाने लाघवान्मनःकरणत्वं विषय इति परामर्शव्यापारकं मनस्तत्र करणमित्युपाध्यायमतमपास्तम् । करणजन्यत्वानुमाने लाघवात् कालकरणत्वस्यैव विषयत्वापातात् । मनसामनेकत्वात् तदपेक्षया कालस्यैकत्वेन लघुत्वात् । एवं दिक्करणत्वेऽपि लाघवम् । तस्माद् विनिगमनाविरहात् सर्वेषामपि करणत्वमिति ।

मिश्रास्तु — मनःकरणत्वे मानसत्वापत्तिः । मानसत्वे मानान्तरासहकृतमनोजन्यत्वस्य तन्त्रत्वात् । न च सन्निकृष्टमनोजन्यत्वं तत्र प्रयोजकं, तच्च नेहेति वाच्यम् । परामर्शस्यैवात्र ज्ञानरूपसन्निकर्षत्वान्मानसत्वस्य दुर्वारत्वादित्याहुः । तत् तु न सम्यक् । वह्निमनुमिनोमि न साक्षात्करोमीति प्रतीत्या साक्षात्त्वाभावस्य निर्णयात् परामर्शस्यासत्तित्वाकल्पनात् सन्निकृष्टमनोजन्यत्वाभावेन मानसत्वाभावादिति ।

ननु परामर्श एवानुमितौ करणमस्तु । न च तस्य व्यापाराभावः । विषयपरिशोधकतर्कस्यैव तद्व्यापारत्वात् । न च तर्कः परामर्शाजन्य इति न तद्व्यापार इति वाच्यम् । यदि निर्वह्निः स्यान्निर्धूमः स्यादित्याकारस्य तस्य धूमाभावापादनरूपस्य स्वारसिकधूमवत्त्वज्ञानजन्यतया तादृशतर्कस्य परामर्शजन्यत्वावश्यकत्वादिति चेद्, न । येन रूपेण कारणता, तेन रूपेण व्यापारस्य वाच्यत्वात् । कारणतायाश्च व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वेन विवक्षितत्वात् । तर्कस्य च धूमवत्त्वज्ञानमात्रजन्यत्वात् । किञ्च, तर्कः शङ्काविधूननद्वारोपयोगी । शङ्का च न सर्व-

त्रेति नानुमितौ तस्य नियतपूर्वसत्तारूपहेतुतेति न परामर्शव्यापारत्वमिति तत्त्वम् ।

केचित् तु—विषयपरिशोधकतर्कस्यानुपयोग एव । क्व व्यापारता । न च विरोधिशङ्कानिवर्तकतया तदुपयोगी । ग्राह्यसंशयस्याविरोधित्वात् । विरोधित्वे वा परामर्शरूपविशेषदर्शनाच्छङ्काया एवाभावः, येन तन्निवृत्त्यर्थं तर्कान्तरापेक्षा स्यादिति वदन्ति ।

अत्र प्राञ्चः—विरोधिजिज्ञासानिवृत्त्यर्थं तर्कोऽपेक्ष्यते, तस्यास्त्वनिष्टप्रसङ्गात्मकतर्कना(व ?)श्यत्वात् । न च विरोधिजिज्ञासायाः प्रतिबन्धकत्वे मानाभावः । कामिनीजिज्ञासादिप्रतिबन्धकत्वानुरोधेन तदावश्यकत्वादित्याहुः । तच्चिन्त्यम् । कामिनीजिज्ञासावह्न्यभावजिज्ञासासाधारणस्य विरोधिजिज्ञासात्वस्यैकस्य ब्रह्मणापि निर्वक्तुमशक्यत्वात् । तस्मात् कामिन्यादिजिज्ञासायाः फलबलेन तद्रूपेण प्रतिबन्धकत्वेऽपि साध्याभावजिज्ञासायाः प्रतिबन्धकत्वे मानाभावादिति ।

मिश्रास्तु—शङ्का द्विविधा स्वरसवाहिनी आहिता च । तत्राद्याया अप्रतिबन्धकत्वेऽपि चरमायास्तथात्वमस्त्येव । अतः प्रकृतेऽपि साध्याभावसाधकनिबन्धना साध्याभावशङ्कानिष्टमुपनयता तर्केण निवर्त्यते । साध्याभावसाधकं किमपि नास्तीति तर्कावतारेण निर्णयाद्, आधायकशङ्काविरहे सत्याहितशङ्कानुत्पत्त्या चानुमानोपपत्तेरित्याहुः ।

अत्र कश्चित्—विरोधिनिर्णयत्वेनैव प्रतिबन्धकत्वात् स्वारसिकी अन्याहिता वा शङ्का न प्रतिबन्धिकेत्याह । तदसत् । एवं सत्युपाध्यादिसन्देहाहितव्यभिचारादिसन्देहस्य प्रतिबन्धकत्वाभावप्रसङ्गात् । तथा चान्याहितशङ्का प्रतिबन्धिकैवेति दिक् ॥

इति लिङ्गकरणतावादः ।

---

## अथ केवलान्वयिवादः ।

लिङ्गं च त्रिविधं केवलान्वयिसाध्यकं केवलव्यतिरेक्यन्वयव्यतिरेकि चेति । तत्राद्यं यथा घटः प्रमेयो द्रव्यत्वादिति । अत्र केवलमन्वयसहचारे-

णैव व्याप्तिग्रहः । साध्यव्यतिरेकाप्रसिद्ध्या व्यतिरेकसहचारासम्भवात् । विचार-प्रयोजकसंशयोऽपि मेयत्वं घटनिष्ठाभावप्रतियोगि न वेत्येव, साध्यसिद्धिनिवर्त्य-संशयस्यैव तत्प्रयोजकत्वात् । ननु किमिदं केवलान्वयित्वम् । अत्यन्ताभा(व ? वा)-प्रतियोगित्वमिति चेद्, न । संयोगाभावाकाशाभावादावव्याप्तेः । तस्यापि सं-योगादिरूपात्यन्ताभावप्रतियोगित्वाद्, अभावाभावस्य भा(वा ? वत्वा)दिति ।

अत्र कश्चिद् — अभावाभावो न प्रतियोगिरूपः । तथा सति घटवति भूतले घटान्योन्याभावबुद्धिर्न स्यात्, तदभावात्मकस्य प्रतियोगिनः सत्त्वात् । तस्मादभावाभावाभिन्न एव । स च संयोगाभावादेर्नास्तीति नाव्याप्तिरित्याह । तन्न । अत्यन्ताभावाभावस्य प्रतियोगिरूपत्वाद्, अन्योन्याभावाभावस्य प्रतियोगिताव-च्छेदकधर्मरूपत्वात्, तेनैव सह तस्य विरोधाद्, अभावप्रतियोगिकपृथगभाव-कल्पनायां गौरवादनवस्थाप्रसङ्गाच्चेति प्राञ्चः ।

अत्र पक्षधरमिश्राः — अत्यन्ताभावाभावो न प्रतियोगिमात्रम् । तथा सति संयोगेन घटसत्त्वे समवायेनापि तदभावस्यासत्त्वप्रसङ्गात् । प्रतियोगिनो विरोधिनः सत्त्वात् । न च तत्र मास्तु समवायारोप्यकघटाभाव इति वाच्यम् । तथा सति समवायेन घटो नास्तीति प्रतीतिविरोधात् । तथा चारोप्यसम्बन्धावच्छिन्नप्रतियो-ग्येवाभावाभावो वाच्य इत्यावश्यकत्वादारोप्यसम्बन्ध एवाभावाभावोऽस्त्विति वदन्ति ।

तत्र नव्याः — अभावाभावस्यारोप्यसम्बन्धरूपत्वे रूपसमवायवति वायौ रूपाभावो न स्यात् । समवायरूपस्याभावाभावस्य सत्त्वादिति दूषणमाहुः । तदभ-व्यम् । विशेषणताविशेषविशिष्टसमवायस्य तत्रारोप्यसम्बन्धत्वात्, तस्य च तत्रा-भावेन रूपाभावसत्त्वाविरोधादिति ।

इदं तु विचारयामः — सम्बन्धमात्रमपि नाभावाभावः । केवलपुरुषे भूतलसंयुक्ते सति दण्ड्यभावो न स्यात् । आरोप्यपुरुषसंयोगस्य सत्त्वात् । तथा च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकारोप्यसम्बन्धो वाच्यः । तथा च विनिगमनाविरहेणारोप्यसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्न एवाभावा-भावोऽस्तु । न चान्योन्याभावाभावत्वं तादात्म्यरूपारोप्यसम्बन्धस्य क्लृप्तमस्तीत्य-न्यत्रापि तथैव कल्प्यत इति वाच्यम् । तत्रापि तादात्म्यावच्छिन्नप्रतियोगिन एव तथात्वात् । किञ्चारोप्यसम्बन्धस्य विरोधनिर्वाहकत्वं, न तु प्रतियोगिकोटि-

प्रवेशोऽपि । अन्यथा समवायावच्छिन्नाकाशाभावाभावस्याकाशसमवायस्य समवायावच्छिन्नाकाशस्य वाप्रसिद्ध्यापातात् । अपि च, यो यदभावः स तदभाव इति व्याप्त्या प्रतियोग्येवाभावाभावः, न त्वारोप्यसम्बन्धः । प्रतियोगिनश्चारोप्यसम्बन्धेन (सह?)अभावविरोध इत्येकसम्बन्धेन प्रतियोगिसत्त्वे तदन्यसम्बन्धेन तदभावो न विरुद्धः । तस्मादभावाभावः प्रतियोग्येवेति संयोगाभावाकाशाभावादेरपि संयोगाकाशादिरूपाभावप्रतियोगित्वादत्यन्ताभावाप्रतियोगित्वं केवलान्वयिलक्षणमनुपपन्नमिति ।

अत्र मणिकृतः — वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । आकाशश्च न वृत्तिमानिति नाकाशाभावाव्याप्तिरित्याहुः । नन्विदमनुपपन्नम् । वृत्तिमत्पदे दत्तेऽप्याकाशाभावाव्याप्तिस्तदवस्था । इदानीमाकाश इति प्रतीत्याकाशस्यापि वृत्तिमत्त्वात् संयोगेनाकाशस्य भूतलादिवृत्तित्वाच्च । एवं संयोगाभावेऽप्यव्याप्तिः, संयोगरूपाभावप्रतियोगित्वात्, संयोगस्य च वृत्तिमत्त्वादिति चेद्, न । स्ववृत्तिविरोधिवृत्तेरेव वृत्तिपदेन विवक्षितत्वात् । भवति च स्वरूपसम्बन्धावच्छिन्नाकाशवृत्तिः समवायावच्छिन्नाकाशाभावाविरोधिनीति विशिष्टाभावसत्त्वान्नाव्याप्तिः । अत एव संयोगाभावेऽपि नाव्याप्तिः, संयोगवृत्तेः संयोगाभाववृत्त्यविरोधित्वात् । न चैवं वृत्तिमत्पदमव्याप्तिवारकतया भागासिद्धिवारकत्वाद् व्यर्थम् । विशिष्टाभावतया सार्थकत्वादित्येके । अव्याप्तिवारकस्यापि व्यवहारे साध्येऽप्रसिद्धिवारकतया व्याप्तिग्रहोपाधिकत्वादित्यन्ये । वस्तुतोऽत्यन्ताभावाप्रतियोगित्वापेक्षया वृत्तिमदत्यन्ताभावाप्रतियोगित्वमधिकदेशवृत्तीति प्रमाविषयत्ववद् विकासकविशेषणत्वान्न व्यर्थतेति प्रत्यक्षमणिसारे विवेचितम् ।

मिश्रास्तु — वृत्तिमदिति विशेषणं नाव्याप्तिवारकं, किन्त्वप्रसिद्धिवारकम् । तथाहि — मेयत्वादेरपि समवायसम्बन्धारोप्यकात्यन्ताभावप्रतियोगित्वसत्त्वादत्यन्ताभावाप्रतियोगिनोऽप्रसिद्धिरेव । न च मेयत्वस्य सर्वत्र सत्त्वात् कथं तदत्यन्ताभाव इति वाच्यम् । समवायसम्बन्धेन तस्य क्वाप्यसत्त्वात् । तेन सम्बन्धेन तदभावस्य सर्वत्र सत्त्वात् । प्रतियोग्यवृत्तिसम्बन्धावच्छिन्नाभावस्य केवलान्वयित्वात् । न चैवं व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमापातः । प्रतियोगिताव्यधिकरणस्य तदवच्छेदकत्वानङ्गीकारात् । आरोप्यसम्बन्धत्वाङ्गीकारे बाधकाभावात् । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनोऽप्रसिद्धतया ज्ञानासम्भवेन व्यधि-

करणधर्मावच्छिन्नाभावानङ्गीकारः । इह त्वारोप्यसम्बन्धस्य न ज्ञानमपेक्षितं, येन व्यधिकरणसम्बन्धावच्छिन्नाभावोऽपि न स्यात् । संसर्गस्य सर्वत्राप्रसिद्धस्यैवारोप्यत्वादिति वदन्ति ।

अत्र शङ्क्यते — आकाशसमवायस्याप्रसिद्धस्य कथमारोपः ? भूतलादौ च घटादिसंयोगोऽन्यत्र प्रसिद्ध एवारोप्यते । किञ्चाहार्योऽयमारोपः । स चाहरणसाध्यः । न चेच्छात्मकं तदज्ञाते सम्भवतीति न समवायसम्बन्धावच्छिन्नाकाशाद्यारोप इति ।

अत्र प्रतिभाति — घटसंयोगमात्रं नारोपविषयः, किन्तु भूतले घटसंयोगः । स च पूर्वाप्रसिद्ध एव । अप्रसिद्धावपि तस्यारोपे प्रमायां वा क्वापि नापेक्षा । संसर्गप्रसिद्धेरनङ्गत्वात् । न च संसर्गप्रसिद्धेरनङ्गत्वेऽप्याकाशसमवायस्यालीकस्य कथमारोप इति वाच्यम् । आकाशस्यैव समवायलक्षणसम्बन्धेनारोप्यत्वात् । आकाशस्य समवायस्य च सत्त्वेनालीकत्वाभावात् । अत एव किञ्चेत्यपास्तं, संसर्गज्ञानस्येच्छायां तन्त्रत्वाभावात् । अन्यथा सुखत्वप्रकारकज्ञानानन्तरं मम सुखमस्त्वितीच्छा न स्यात्, सुखसमवायस्य पूर्वमज्ञानादिति । वस्तुतोऽन्योन्याभावप्रतियोगितानवच्छेदकत्वं केवलान्वयित्वम् । घटाद्यवच्छिन्नान्योन्याभाववन्मेयत्वाद्यवच्छिन्नान्योन्याभावाभावादिति न काप्यव्याप्तिरिति तत्त्वम् ।

वयं तु — एकजातीयसम्बन्धेन सर्ववृत्तित्वं केवलान्वयित्वम् । अस्ति च मेयत्वादेस्तथात्वं, स्वरूपसम्बन्धेन जगद्वृत्तित्वात् । घटादेस्तु न तथात्वं, क्वचित् संयोगेन क्वचित् समवायेन क्वचित् स्वरूपसम्बन्धेन वृत्तेः । न चैवं घटाभावस्यापि जगद्वृत्तित्वात् केवलान्वयित्वापातः । कपालादावपि सम्बन्धान्तरेण तदभावनियमादिति वाच्यम् । घटाभावत्वादिना केवलान्वयित्वस्येष्टत्वात् । संयोगाद्यवच्छिन्नघटाभावत्वादिना त्वतथात्वं, भूतलादाववृत्तेरिति ब्रूमः ।

ननु प्रमेयत्वं कथं केवलान्वयि, प्रमाविषयत्वरूपस्य तस्य प्रमातद्विषयत्वयोरननुगमेनाननुगतत्वादिति चेद्, न । प्रमात्वेनोपस्थिताः प्रमाव्यक्तयस्तद्विषयत्वानुगमिका इति प्राञ्चः ।

तत्र शङ्क्यते — प्रमात्वमपि यत्तद्धर्मत्वेनाननुगतं कथं प्रमाव्यक्त्यनुगमकमस्तु । किञ्च, विशेष्यतावच्छेदकं यद्येकं तदा परं विशेषणानुगमेनानुगमस्वीकारः । अन्यथा देवदत्तयज्ञदत्तौ छत्रिणावित्यत्रापि छत्रित्वेनोभयानुगमप्रसङ्गात् । तथा च विषयत्वानुगमः कथं प्रमात्वानुगतप्रमयोरिति ।

अत्र प्रतिभाति — अचेतनाधिकरणक(?)प्रमापदवृत्तिनिमित्तत्वेन प्रमात्वस्यानुगमेनाद्यदोषनिरासः । किञ्चेत्यपि न । समासेनैकपदत्वे विशेषणानुगमे तन्निरूप्यस्याननुगतस्याप्यनुगमाङ्गीकारात् । अत एव छत्रिगमनमित्यादौ छत्रत्वेनानुगतं छत्रं गमनमनुगम(ये ? य)त्येव । कथमन्यथा गन्धवत्त्वाद्युपाधीनामप्यनुगमः, गन्धादेरनेकत्वात् । यदि च गन्धत्वेनानुगमस्तदा प्रकृतेऽपि तुल्यम् । किञ्च, विषयत्वमपि ज्ञानमेव । तत्र च ज्ञानत्वमेवानुगमकमिति नानुपपत्तिः । वस्तुत ईश्वरप्रमाविषयत्वमेव प्रमेयत्वं, तस्या एकत्वेनाननुगमाभावात् । किं बहुना, सर्वमित्याद्यस्मदादिप्रमाविषयत्वस्यापि तथात्वे दोषगन्धाभावात् । यत्तु — घटत्वादिदृष्टान्तेन प्रमेयत्वादीनामपि धर्मत्वेन हेतुनात्यन्ताभावप्रतियोगित्वमनुमीयत इति केवलान्वयिधर्म एव नेति । तन्न । धर्मत्वस्यापि केवलान्वयितया तेनाकेवलान्वयित्वस्य व्याघातेन साधनासम्भवात् प्रमाविषयत्वाभावेऽसत्त्वापत्त्यानुमानस्य बाधितत्वाच्च । ईश्वरप्रमाया धर्मिग्राहकादेव जगद्विषयत्वसिद्ध्या तद्विषयत्वाभावस्य साधयितुमशक्यत्वाच्च ।

केचित् तु — अत्यन्ताभावप्रतियोगित्वमत्यन्ताभावप्रतियोगि, न वा । आद्ये यन्निष्ठात्यन्ताभावप्रतियोग्यत्यन्ताभावप्रतियोगित्वं, तस्यैवात्यन्ताभावाप्रतियोगित्वेन केवलान्वयितया तत्रैव धर्मत्वस्य हेतोर्व्यभिचारः । अन्त्येऽत्यन्ताभावप्रतियोगित्व एव व्यभिचार इति नेदमनुमानं सम्भवतीत्याहुः ।

इति केवलान्वयिवादः ।

---

## अथ व्यतिरेकिग्रन्थः ।

केवलव्यतिरेकि तु व्यतिरेकसहचारग्राह्यव्याप्तिक इति मणिकृतः । तत्र शङ्क्यते — अन्वयव्यतिरेकिणि लक्षणमिदमतिव्याप्तम् । न च व्यतिरेकसहचारमात्रग्राह्यव्याप्तिकत्वं तदर्थः । अन्वयव्यतिरेकिण्यपि कदाचिद् व्यतिरेकसहचारमात्रेण व्याप्तिग्रहात् । न च तदा स केवलव्यतिरेक्येवेति वाच्यम् । तथा सति यो यदा व्यतिरेकसहचारमात्रग्राह्यव्याप्तिकः, स तदा केवलव्यतिरेकीत्यर्थः पर्यवस्यति । तथा चायं संयोगाभाववान् विभागाभाववत्त्वादित्यत्र व्यतिरेकव्याप्तिग्रह-

काले व्यतिरेकित्वप्रसङ्गः । न चेष्टापत्तिः । तदा तस्य केवलव्यतिरेकित्वादेवेति वाच्यम् । केवलान्वयिसाध्यकत्वेन केवलान्वयितया तद्विरुद्धकेवलव्यतिरेकित्वायोगादिति ।

अत्र प्रतिभाति — केवलान्वयिभिन्नत्वे सति केवलव्यतिरेकसहचारग्राह्यव्याप्तिकत्वं यस्य यदा, स तदा केवलव्यतिरेकी । संयोगाभावसाध्यकं च केवलान्वय्येवेति न तत्रातिप्रसङ्गः । न च केवलव्यतिरेकिभिन्नत्वे सति केवलान्वयिसाध्यकत्वमेव केवलान्वयित्वमस्त्विति संयोगाभावसाध्यकः केवलव्यतिरेक्येवास्त्विति वाच्यम् । अन्वयसहचारमात्रेण व्याप्तिग्रहदशायां तस्य तदा केवलव्यतिरेकसहचारमात्रग्राह्यव्याप्तिकत्वाभावेन केवलव्यतिरेकित्वासम्भवेन केवलान्वयित्वस्यावश्यं वाच्यतया केवलव्यतिरेकिभिन्नत्वघटितलक्षणायोगादव्याप्तिः । अन्योन्याभावस्य तद्वृत्त्यभावात् । न च तदातनकेवलव्यतिरेकिभिन्नत्वमर्थः । तच्चान्वयसहचारमात्रग्राह्यव्याप्तिकतादशायामस्त्येवेति नाव्याप्तिरिति वाच्यम् । एतदपेक्षया केवलान्वयिभिन्नत्वस्यैव लघुतया व्यतिरेकिलक्षणे प्रवेशौचित्यात् । तदातनत्वस्य तत्राप्रवेशात् । एवं सति केवलान्वयित्वकेवलव्यतिरेकित्वयोर्न सङ्करशङ्कापीति युक्तमुत्पश्यामः ।

अन्वयव्यतिरेकित्वं तु अन्वयव्यतिरेकोभयसहचारग्राह्यव्याप्तिकत्वमिति सर्वे । तदपि चिन्त्यते — प्रत्येकमन्वयो व्यतिरेकश्च यत्र व्याप्तिग्राहकस्तत्त्वमित्यर्थो वा मिलितौ यत्र तद्ग्राहकावित्यर्थो वाभिमतः । नाद्यः । केवलान्वयिनि केवलव्यतिरेकिणि चातिव्याप्तेः । नान्त्यः । वह्निसाध्यकेऽन्वयसहचारमात्रेण व्याप्तिग्रहदशायां तुरीयतापत्तेः । केवलान्वयित्वस्य केवलव्यतिरेकित्वस्य वा लक्षणाभावादिति ।

अत्र ब्रूमः — केवलान्वयिभिन्नत्वे सति केवलव्यतिरे(कि ? क)सहचाराग्राह्यव्याप्तिकत्वदशावर्तित्वमन्वयव्यतिरेकित्वम् । इदं लक्षणं च केवलमन्वयसहचारेण सहचाराभ्यां (वा) व्याप्तिग्रहदशायामस्तीति न कोऽपि दोषः ।

इदं त्ववधेयं — केवलव्यतिरेकित्वान्वयव्यतिरेकित्वयोः कालभेदेन सङ्करोऽस्त्येव । केवलान्वयित्वस्य केनापि सङ्करो नेति दिक् ।

ननु व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वेनानुमितौ हेतुत्वाद् व्यतिरेकिस्थले व्याप्तिपक्षधर्मताज्ञानयोः व्यतिरेकान्वयविषयकत्वेन भिन्नविषयकत्वनियमात् कथ-

मनुमितिरिति चेद्, न। व्यतिरेकसहचारेणान्वयव्याप्तिग्रहणाद् व्याप्तिविशिष्ट-पक्षधर्मताधीसम्भवात्। न चान्यसहचारात् कथमन्यव्याप्तिधीरिति वाच्यम्। प्रतियोग्यनुयोगिभावस्य नियामकत्वाद्। यद्वा, व्यतिरेकसहचाराद् व्यतिरेक-व्याप्तिधीरेव। न चैवं परामर्शाभावादनुमित्यनुदयापातः। व्याप्तिज्ञानस्यानुमिति-त्वावच्छेदेन हेतुत्वाद् अन्वय्यनुमितौ परामर्शस्य व्यतिरेक्यनुमितौ साध्याभाव-व्यापकाभावप्रतियोगित्वज्ञानस्य विशेषसामग्रीत्वादिति मणिकृतः।

अत्र वदन्ति—व्यतिरेकसहचारादन्वयव्याप्तिधीः कथम्, अधिकरणा-द्यसन्निकर्षात्। न च यत्राधिकरणादिसन्निकर्षस्तत्परः प्रथमः पक्षः, अन्यत्र तु द्वितीयः पक्ष इति वाच्यम्। तथाप्यन्वयसहचारव्यतिरेकसहचारयोरननुगमाद् व्याप्ति(त?)ग्राहकत्वानुपपत्तिः। किञ्च, यत्र सहचाराभ्यां मिलित्वा व्याप्तिग्रहस्तत्र प्रत्येकसहचारधीजन्यव्याप्तिधियोर्वैलक्षण्यं वाच्यम्। तच्च विषयकृतं नेति जातिकृतं वाच्यम्। तच्च चाक्षुषत्वादिजात्या सङ्करादसम्भवीति।

अत्राहुः—अन्वयव्यतिरेकसहचारयोर्न प्रत्येकं प्रयोजकता, येनोक्तदोषः प्रसज्ज्येत। किन्तु व्यभिचारज्ञानविरोधिसहचारज्ञानत्वेनानुगतेनैवेति नाननुगमो न वा जातिसङ्करोऽपि। नह्येकदण्डजन्यघटापेक्षया दण्डद्वयजन्यघटस्य वैलक्षण्य-मस्ति। तथा च सहचारद्वयधीजन्यव्याप्तिज्ञाने तथैवेति। यत् त्वत्र दूषणं सह-चारज्ञाने विद्यमानेऽपि वह्न्यादौ धूमव्यभिचारज्ञानान्न सहचारज्ञानं तद्धीविरोधीति कथमुक्तक्रमेणानुगम इति। तन्न। स्वाधिकरणे व्यभिचारधीविरोधित्वस्य विवक्षि-तत्वादिति प्रागेवोक्तत्वात्। यथा चैवं नातिप्रसङ्गस्तथा सहचारग्रन्थ एव व्युत्पा-दितम्। अत एव सहचारधीर्व्याप्तिग्रहे विशेषणज्ञानत्वेन हेतुरिति कथमविशेष-णीभूतव्यतिरेकसहचारस्यान्वयव्याप्तिग्राहकत्वमिति कस्यचित् प्रलपितमपास्तम्। विरुद्धस्थलीयव्याप्तिभ्रमानुरोधेन सहचारधीत्वेनापि हेतुत्वस्य प्राग् व्यवस्थाप-नात्। न चैवमपि स्वसहचारज्ञानत्वेनैव हेतुत्वेऽपि स्वव्यतिरेकसहचारज्ञानस्य हेतुत्वे मानाभाव इति वाच्यम्। स्वसहचारज्ञानस्यैव व्यभिचारज्ञानविरोधिसह-चारज्ञानत्वेन सामान्येन हेतुत्वात्। न च तस्य सामान्यत्वेऽपि स्वसहचारज्ञान-त्वस्य विशेष्यस्य लघुशरीरत्वमिति वाच्यम्। तथा सति प्रमेयत्वादिना स्वसह-चारज्ञानेऽपि व्याप्तिग्रहप्रसङ्गात्। तस्माद् व्यभिचारज्ञानविरोधिसहचारज्ञानं हेतु-र्वाच्यः। तथा च व्यतिरेकसहचारस्यान्वयव्याप्तिग्राहकत्वमवर्जनीयमिति दिक्।

द्वितीयपक्षे तु शङ्क्यते — विशेषसामग्रीद्वयकल्पने मानाभावः । व्यतिरेकसहचारेण व्यतिरेकव्याप्तिग्रहपक्षेऽपि व्यतिरेकिण्यपि परामर्शस्यैव हेतुत्वसम्भवात् । हेतुनिष्ठव्यभिचारज्ञानविरोधिव्याप्तिवैशिष्ट्यविषयकपक्षधर्मताज्ञानस्यैव परामर्शत्वात् तस्य च सर्वानुमितिसाधारण्यादिति ।

अत्र मिश्राः — अन्वय्यनुमितौ व्यापकतावच्छेदकप्रकारकत्वस्य व्यतिरेक्यनुमितौ व्याप्यतावच्छेदकावच्छिन्नाभावत्वप्रकारकत्वस्य चानुभवसिद्धकार्यवैलक्षण्यस्यान्यथानुपपत्त्या विशेषसामग्रीद्वयमवश्यं कल्प्यमेव । अन्यथा कार्यवैजात्यमाकस्मिकं स्यात् । तथा च तत एवातिप्रसङ्गभङ्गे सामान्यसामग्र्यनुगमे मानाभावः । अत एव टीकादौ सर्वत्र नेदं निरात्मकं जीवच्छरीरमिति व्यतिरेकमुखेनैव व्यतिरेक्युपदर्शनमित्याहुः ।

तत्रेदं विचार्यते — एवं सत्यन्वयव्यतिरेकिणि व्यापकतावच्छेदकप्रकारिका व्याप्यतावच्छेदकावच्छिन्नाभावत्वप्रकारिका चैकानुमितिः स्यात् । तथा चानुभवविरोधः । न च व्यतिरेकसहचारात् तत्रान्वयव्याप्तिधीरेव, तत्सामग्रीभूताधिकरणसन्निकर्षसत्त्वादिति तत्र व्यापकतावच्छेदकवह्नित्वादिप्रकारिकैवानुमितिः, न वह्न्यभावाभावत्वादिप्रकारिकेति वाच्यम् । व्यतिरेकसहचारस्यान्वयव्यतिरेकोभयव्याप्तिग्रहं प्रति कृतकारणभावत्वेनेतरसामग्रीसमवधाने सत्युभयव्याप्तिग्राहकत्वाविरोधादिति । न चान्वयव्यतिरेकिणि परस्परविरोधेनानुमितिरेव नोभयव्याप्तिग्रहदशायामिति वाच्यम् । अनुभवविरोधादिति ।

अत्र ब्रूमः — उभयव्याप्तिग्रहदशायामपि वह्निमानित्याकारानुमितेरेवोत्पत्त्या लाघवेन वह्नित्वप्रकारकानुमितेरेव निश्चयेन तत्सामग्र्या वह्न्यभावाभावत्वप्रकारकानुमितिप्रतिबन्धकता कल्प्यते । प्रतिबन्धकताया मण्यादिवत् प्रतिबन्धैककल्प्यत्वात् । यच्चात्र नव्यैर्दूषणमदायि — प्रतिज्ञानुमित्योः समानाकारतयेतरभेदाभावाभावत्वप्रकारकानुमितिसमानाकारा इतरभेदाभावाभाववती पृथिवीति प्रतिज्ञा स्यान्न त्वितरभेदवतीति । तदज्ञानात् । व्यतिरेकसहचारादन्वयव्याप्तिग्रहपक्षे इतरभेदवतीत्याकाराविरोधात् । व्यतिरेकव्याप्तिग्रहपक्षे तु नेदं निरात्मकं जीवच्छरीरमित्येव प्रतिज्ञाकारादिति । यत्तु — व्यतिरेकस्थले व्याप्यतावच्छेदकावच्छिन्नाभावत्वप्रकारकानुमितिर्वाच्यैव । अन्यथा यत्र भ्रमेण प्रमेयत्वादिव्यतिरेकग्रहाद् व्यतिरेकसहचारज्ञानं, तेन व्यतिरेकव्याप्तिग्रहः, तत्र प्रमेयत्वप्रकारकानु-

मितिः स्यात् । न चेष्टापत्तिः । जनकीभूतव्याप्तिज्ञानस्य भ्रमत्वेन प्रमानुमित्यसम्भवादित्यनुमितिभ्रमत्वनिर्वाहार्थं प्रमेयत्वाभावाभाववत्त्वप्रकारकत्वमनुमितेरङ्गीकार्यमेवेति । तत्तु न । वह्निमति धूलीपटले धूमभ्रमेण वह्न्यनुमितेर्विषयाबाधेन प्रमात्ववत् प्रमेयत्वप्रकारकानुमितेरपि प्रमात्वे बाधकाभावादिति न किञ्चिदेतत् ।

इदं तु शङ्क्यते—व्यतिरेकिणि साध्याभावव्यापकाभावप्रतियोगित्वं न नियामकम् । संयोगेन रूपानुमानापातात्, रूपाभावव्यापकसंयोगाभावप्रतियोगित्वात् संयोगस्य । संयोगाभावस्य केवलान्वयितया सर्वव्यापकत्वात् । एवं द्रव्यत्वेन संयोगानुमानं न स्यात् । संयोगाभावाव्यापकत्वाद् द्रव्यत्वाभावस्येति ।

अत्राहुः—प्रतियोगिविरुद्धसाध्याभावव्यापकप्रतियोगिविरुद्धाभावप्रतियोगित्वं नियामकम् । तथा चाद्याभावविशेषणादव्याप्तेर्द्वितीयाभावविशेषणादतिव्याप्तेश्च निरास इति ।

अत्रेदं चिन्त्यते—एवं सत्ययं संयोगविशेषाभाववान् विभागविशेषाभाववत्त्वादित्यत्र व्यतिरेकव्याप्तिग्रहदशायामनुमितिर्न स्यात् । साध्याभावहेत्वभावयोः संयोगविभागरूपयोः प्रतियोगिविरुद्धत्वाभावादिति ।

अत्र कश्चित्—तत्रानुमितिर्न भवत्येव, उक्तहे(तुः)त्वसंभवादिति । तत् तुच्छम् । निर्वचनासामर्थ्यमात्रेणैवानुभवापलापस्य बालप्रलापत्वादिति ।

अत्र ब्रूमः—संयोगाभावसाध्यकस्य केवलान्वयित्वेन तत्र व्यतिरेकसहचारादन्वयव्याप्तिग्रह इत्येव वाच्यम् । तथा च तत्र परामर्श एव हेतुः, न तूक्तं, तस्य व्यतिरेकसाध्यकानुमितावेव हेतुत्वात् । यद्वा, यत्राव्याप्यवृत्तितानियताभावप्रतियोगि साध्यं हेतुर्वा, तत्र प्रतियोगिविरुद्धत्वं न विशेषणम् । अनतिप्रसङ्गाल्लाघवाच्च । सकलसाधारणैकनियामकस्य ब्रह्मणापि वक्तुमशक्यत्वादिति ।

इदं तु विचारणीयं—किं वस्तुगत्या साध्याभावव्यापकत्वज्ञानमुपयोगि, उत साध्याभावत्वेन ज्ञायमानस्य व्यापकताज्ञानं वा । नाद्यः । यत्र पटादौ घटाभावत्वमारोप्य तद्व्यापकतया लोष्टत्वादि गृहीतं, तत्र लोष्टत्वाद्यभावेन घटाननुमानापातात् । नान्त्यः । अप्रसिद्धसाध्यकाव्याप्तेः, तत्र साध्याप्रसिद्ध्या तदभावत्वेन ज्ञानासम्भवात् । एवं हेत्वभावेऽपि विकल्पनीयमिति ।

अत्रायं समाधिः — यद्रूपावच्छिन्नव्यापकतया यद्रूपावच्छिन्नं ज्ञायते, तद्रूपावच्छिन्नाभावत्वप्रकारिका तद्रूपावच्छिन्नोपस्थितिकाभावज्ञानादनुमितिः । अस्ति चैतदप्रसिद्धसाध्यकेऽपि । अप्रामाण्यत्वेनोपस्थिताप्रामाण्यव्यापकताज्ञानात् तदभावत्वेनानुमितेरारोपस्थलेऽप्युक्तमस्त्येवेति न काचिदनुपपत्तिः । अधिकं च प्रत्यक्षमणिसारे सुव्यक्तमिति नेह तन्यते ।

इदं त्ववधेयं — व्यतिरेकिणि व्यतिरेकव्याप्तिग्रहपक्षे पक्षतावच्छेदकस्य हेतुत्वे दोष एव ना(स्ति ? स्तीति) पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यनुमानमविरुद्धम् । अन्वयव्याप्तिग्रहपक्षेऽपि नानुपपत्तिः । पृथिवीत्वमितरभेदव्याप्यमिति ज्ञानेऽपि पृथिवीविशेष्यकेतराविशेषणेतरभेदविशेषणकज्ञानस्योद्देश्यस्याभावेन पक्षतावच्छेदकहेत्वभेदनिबन्धनसिद्धसाधनानवकाशात् । अनुमितिसमानाकारसिद्धेरेव प्रतिबन्धकत्वात् । व्याप्तिबुद्धौ पृथिवीत्वस्य विशेष्यत्वात् । इतरभेदस्य सामानाधिकरण्यविशेषणतया भानाच्चानुमितिसमानाकारताविरहात् । अस्तु वा समानविषयसिद्धिमात्रं प्रतिबन्धकम् । तथापि पृथिवीविशेष्यकेतरभेदविशेषणकसिद्धेरुद्देश्याया असिद्धत्वात् सिसाधयिषागर्भपक्षतासत्त्वमस्तीति नानुपपत्तिः । प्राञ्चस्तु — गन्धवत्त्वमेव पक्षतावच्छेदकं, न पृथिवीत्वमिति नोक्तदोष इत्याहुः ।

ननु पृथिवी इतरेभ्यो भिद्यते इत्यादिव्यतिरेकिणि साध्याप्रसिद्ध्या पक्षताघटकसंशयसाध्यरूपविशेषणज्ञानान्वयव्यतिरेकान्यतरव्याप्तिज्ञानात्मकानुमितिप्रयोजकानामभावात् कथं सेति चेत् । अत्र कश्चिद् — इतराप्रतियोगिकभेदाभाव एव साध्यः । इतराप्रतियोगिकभेदस्य घटभेदस्याभावो घट एव प्रसिद्धः । स च पृथिवीत्वावच्छेदेन सिध्यन्नेक एव सिध्यतीति न तत्तत्पृथिव्यां स्वस्वभेदाभावमादाय सिद्धसाधनम् । न चैवमुक्तो विशिष्टाभावः सिध्यतु, न त्वितरभेद इति वाच्यम् । भेदरूपविशेष्यवति विशिष्टाभावस्येतराप्रतियोगित्वरूपविशेषणाभावमादाय सिद्ध्येतरभेदसिद्धिरिति । तन्न । एवमपि विशिष्टाभावत्वप्रकारिकानुमितिः स्याद्, न त्वितरभेद(त्व)प्रकारिकेति ।

अत्र प्राञ्चः — पृथिव्यामेव साध्यप्रसिद्धिः । पृथिवी जलभिन्ना न वेत्यादित्रयोदशकोटिकैकसंशयेन तस्यां त्रयोदशभेदावगतेः । न चैवं पक्ष एव साध्यप्रसिद्ध्या सिद्धसाधनम् । निश्चयार्थं व्यतिरेकिप्रवृत्तेः । अन्यथा पक्षे साध्यसन्देहस्य सर्वत्र सत्त्वेनानुमानमात्रविलयापातादित्याहुः ।

तत्र मणिकृतः—साध्यनिश्चये सति साध्यव्यतिरेकनिश्चयो भवति। तत्संशये तु तत्संशयस्यैवोत्पत्तेर्न व्यतिरेकव्याप्तिनिश्चयः सम्भवति। संशयरूपसाध्यप्रसिद्ध्यभिधानं शिष्य(*यन्धन ?)मात्रमिति वदन्ति।

अत्रोपाध्यायाः—अभावज्ञानं प्रति लाघवात् प्रतियोगिज्ञानत्वेन हेतुता, न तु तन्निश्चयत्वेन। तथा च भेदसमुदायस्य पृथिव्यां सन्दिग्धस्य जलादौ व्यतिरेकनिश्चये बाधकाभावः। किञ्च, जलं जलादित्रयोदशान्योन्या(भावा)भाववत् तदेकदेशस्वभेदाभाववत्त्वात् यद्यदेकदेशाभाववत् तत्तत् समुदायाभाववदिति सामान्यतो व्याप्तिरिति व्यतिरेकव्याप्तिधीरानुमानिकी सम्भवत्येवेति संशयरूपसाध्यप्रसिद्धौ शिष्ययन्धनत्वाभिधानं शिष्ययन्धनमित्यवोचन्।

तत्र मिश्राः—साध्यनिश्चयं विना योग्यानुपलम्भाभावेनाभावनिश्चय एव न सम्भवति। प्रतियोगिनिश्चायकसमवधानस्यात्र योग्यानुपलम्भसम्पादकत्वात्। तन्निश्चयाप्रसिद्धौ निश्चायकस्याप्यप्रसिद्धेर्योग्यानुपलम्भासम्भव एवेति न व्यतिरेकव्याप्तिनिश्चयः। तथा च संशयरूपसाध्यप्रसिद्धौ शिष्ययन्धनत्वाभिधाने शिष्ययन्धनत्वाभिधानं स्वस्यैव शिष्ययन्धनमिति। किञ्चेत्यप्यसत्। यत्तद्भ्यामनुगतव्याप्यतावच्छेदकव्यापकतावच्छेदकपुरस्कारं विना व्याप्तिग्रहाभावादित्याहुः।

अत्रेदं विचारणीयं—योग्यानुपलब्धिः स्वरूपसती हेतुः न ज्ञाता। तथा चेदानीं तन्निश्चयाप्रसिद्धावप्यग्रे भा(व?वि)निश्चयमादाय निश्चायकसमवधानगर्भानुपलब्धिः साध्यसंशयदशायामप्यस्तीति कथं न जलादौ साध्याभावग्रह इति संशयरूपसाध्यप्रसिद्ध्यभिधानमाचार्याणां न शिष्ययन्धनमिति तत्र शिष्ययन्धनत्वारोप एव महतामनुचित इति।

अत्र नव्याः—आचार्यमते व्यतिरेकसहचारादन्वयव्याप्तिर्गृह्यते। तच्च पक्षे साध्यसंशये सति न भवति, तत्र साध्यसाधनसामानाधिकरण्यसंशयात्। तन्निश्चयस्य व्याप्तिनिश्चायकत्वादिति। तदनतिकोमलम्। तत्र साध्याभावसहचारनिश्चयस्य व्याप्तिनिश्चायकस्य सत्त्वात्। तस्य च जलादावुक्तक्रमेण भावात्। न हि व्यतिरेकसहचारेण व्याप्तिग्रहस्थले साध्यसाधनसहचारनिश्चयस्तन्त्रामिति कोऽपि

---

* 'यन्धन' इत्यस्य स्थाने 'यन्त्रण' इति वा 'बन्धन' इति वा पठनीयं भाति।

ब्रूते। अथायमाशयः साध्यसाधनसामानाधिकरण्यसंशयः प्रतिबन्धक इति। तदपि न। ग्राह्यसंशयस्याप्रतिबन्धकत्वात्।

केचित् तु—विशिष्टज्ञाने विशेषणनिश्चयत्वेन हेतुता वाच्या। अन्यथा स्थाणुर्वा पुरुषो वेति संशयानन्तरं स्थाणुत्वविशेषणज्ञानात् स्थाणुरिति निश्चयज्ञानापातात्। तथा च प्रतियोगिनोऽप्यभावविशेषणतया तन्निश्चयं विना नाभावनिश्चय इति संशयरूपसाध्यप्रसिद्धिरकिञ्चित्करीति। तदप्यसभ्यम्। संशयोत्तरं स्थाणुरिति विशिष्टप्रत्यक्षे विशेषदर्शनस्य हेतुतया तदभावादेव तदनुत्पादात्। तत्सत्त्वे चेष्टापादनात्। किञ्चैवं संशयानन्तरं संशयो न स्यात्। निश्चयरूपविशेषणज्ञानाभावात्।

गौडास्तु—पृथिव्यां तदितरभेदसंशये कथं व्यतिरेकिप्रवृत्तिः, हेतोः साध्याभावसामानाधिकरण्यात्मकव्यभिचारसंशयात्। न चानुमानमात्रोच्छेदकतया हेतुमति साध्यसंशयो न विरोधीति वाच्यम्। व्यापकाभाववत्तया निश्चिते व्याप्यसंशयात्मकव्यभिचारसंशयस्य सन्दिग्धानैकान्तिकतानुरोधेन प्रतिबन्धकत्वाङ्गीकारात् प्रकृतेऽपि पृथिवीत्वाभावरूपव्यापकाभाववत्तया निश्चयादितरभेदाभावरूपव्याप्यसंशयस्यावश्यं प्रतिबन्धकत्वात्। तथा च संशयरूपसाध्यप्रसिद्धिर्न तन्त्रं, प्रत्युत विरोधिनीति वदन्ति। तदपि न भद्रम्। भवत्वेवं, तथापि व्यतिरेकव्याप्तिर्मा गृह्यतां, तत्रोक्तव्यभिचारसंशयस्य प्रतिबन्धकत्वात्। आचार्यास्तु व्यतिरेकसहचारादन्वयव्याप्तिग्रहं वदन्तो नैवं पर्यनुयोज्याः, निरनुयोज्यानुयोगप्रसङ्गात्। तस्मान्मात्सर्यमुत्सार्य सम्यग् विचारणीयमेतत् सूरिभिरिति।

मणिकृतस्तु—नेह साध्याप्रसिद्धिः। घटादावेवेतरभेदस्य प्रत्यक्षसिद्धत्वात्। घटो न जलादिरिति प्रतीतेः। न चेतराकाशादेरयोग्यतया कथं तद्भेदः प्रत्यक्ष इति वाच्यम्। अयोग्यप्रतियोगित्वेऽपि योग्यानुपलब्धिसत्त्वेन ग्रहणसम्भवात्। प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकानुपलब्धेरेव तत्त्वात्। तस्याश्चात्रापि घटो यदि तत् स्यात्, तत्तयोपल(भे?भ्ये)तेत्यादिना सत्त्वात्। अत एव स्तम्भे पिशाचान्योन्याभावः प्रत्यक्षः। न चैवं सिद्धसाधनं, घटस्यापि पक्षतया तत्र साध्यस्य सिद्धत्वादिति वाच्यम्। एकदेशे साध्यसिद्धावपि सर्वा पृथिवी इतरभिन्नेत्युद्देश्यप्रतीत्यभावेन सिद्धसाधनानवकाशात्। पक्षतावच्छेदकनानात्व एवांशतः सिद्धसाधनात्। अत एवानित्ये वाङ्मनसे इत्यत्र अनित्या वागिति सिद्धेरुद्दे-

श्यायाः सिद्धावंशतः सिद्धसाधनम् । न च घटे साध्यनिश्चयात् संशयगर्भपक्षताविरहः । घटत्वेन संशयाभावेऽपि पृथिवीत्वेन तस्य साध्यसंशयसम्भवात् । समानप्रकारकनिश्चयस्य तादृशसंशयप्रतिबन्धकत्वात् । यद्वा, घटादिभिन्नपृथिवीत्वेन पक्षतेति न काप्यनुपपत्तिरित्याहुः ।

अत्र वदन्ति — उक्तानुपलब्धेरभावग्राहकत्वे वायावुद्भूतरूपवदन्योन्याभावस्यापि रूपात्यन्ताभाववत् प्रत्यक्षतापातः, घटे मनस्त्वात्यन्ताभावप्रत्यक्षतापातश्च, उद्भूतरूपपरमाणौ महत्त्वाभावप्रत्यक्षतापातश्च । यदि वायुरुद्भूतरूपवान् स्याद् उपलभ्येतेत्यादिना, घटे यदि मनस्त्वं स्याद् घटत्ववद् योग्यवृत्तिजातितया गृह्येतेत्यादिना, उद्भूतरूपपरमाणौ यदि महत्त्वं स्यादवश्यं गृह्येतेत्यादिनोपलम्भापादनसम्भवादिति ।

अत्र मिश्राः — तेऽप्यभावाः प्रत्यक्षा एव । उक्तयोग्यानुपलब्धिविषयाभावत्वेनैव योग्यत्वात् । योग्यानुपलब्धेः सहकारित्वेऽप्युद्भूतरूपादेरालोकसहकारिणस्तत्रावच्छेदकत्ववत् तत्सम्भवात् । यद्वा, यत्र यत्सत्त्वं तर्कितं यदुपलम्भापादकं, तत्प्रतियोगिकाभावस्तत्र योग्य इति नानुपलब्धेरवच्छेदकताप्रसङ्ग इत्याहुः ।

उपाध्यायास्तु — घटे मनस्त्वाभावस्य वायौ रूपवदन्योन्याभावस्य उद्भूतरूपपरमाणौ महद्भेदस्य च योग्यानुपलब्धिरूपग्राहकसत्त्वेऽपि योग्यताविरहान्न ग्रहः । संसर्गाभावे योग्यप्रतियोगित्वस्यान्योन्याभावे योग्याधिकरणत्वस्य योग्यतावच्छेदकत्वात् । फलानुरोधात् तथा कल्पनादित्याहुः । अत्र यथानुभवं व्यवस्था द्रष्टव्या । वस्तुतस्तूपाध्यायमतेऽप्युद्भूतरूपपरमाणौ महत्त्वाभावग्रहः किं न स्यात् । तत्र चेष्टापत्तौ किमपराद्धं महद्भेदेनेति मिश्रमतमेव सम्यक् । अनुपलब्धिस्वरूपं च प्रत्यक्षमणिसार एव विवेचितमिति नेह विविच्यते ।

नन्वाकाशभेदेऽपि घटस्यात्राकाशत्वमुपलभ्येतेत्यापादनं न सम्भवति, आकाशत्वस्यायोग्यत्वात् । तथा च कथमाकाशभेदो घटादौ योग्यानुपलब्धिग्राह्यः । न चाकाशत्वस्य योग्यव्यक्तिवृत्तित्वेन योग्यताप्यापाद्यैवेति वाच्यम् । गुरुत्वे व्यभिचारात् । जातित्वे सतीति विशेषणे चासिद्धेः । तस्य जातित्वाभावात् । तथा चोक्तानुपलब्ध्यसम्भव एवेति चेत् । अत्र मिश्राः — आकाश(त्व)स्य जातित्वे खल्वेकव्यक्तिवृत्तित्वमेव बाधकम् । तच्च घटाभेदापादने गतमेव ।

तथा सति घटेऽप्याकाशत्वसत्त्वगमनादिति योग्यव्यक्तिवृत्तिजातितयोपलम्भापादनं तस्य घटे कर्तुं शक्यत एवेति कथं तद्भेदो न प्रत्यक्षः। एवं घटे यदि विशेष-(त्वं?वत्त्वं) स्याद्, ऐन्द्रियकवृत्ति स्यात्। तथा च प्रत्यक्षं स्यात्। अतीन्द्रियमात्रवृत्तित्वेनैव तस्यायोग्यत्वादिति विशेषादिविरहोऽपि प्रत्यक्ष इति वदन्ति।

अत्र शङ्क्यते — यद्यापादितयोग्यतया उपलम्भापादनेनाभावः प्रत्यक्षः, तदा घटेऽणुपरिमाणाभावज्ञानापातः। अणुपरिमाणं यदि घटवृत्ति स्यात्, तदा योग्यवृत्तिपरिमाणत्वेन योग्यं स्यात्। तथा च गृह्येतेत्यापादनसम्भवादिति।

अत्र ब्रूमः — यदधिकरणे आपाद्यमानं तस्यायोग्यतां नापादयति, तत्र तदभावो योग्यानुपलब्धिग्राह्यः। अणुपरिमाणं च घटे आपाद्यमानं तस्यायोग्यतामेवापादयति, अणुपरिमाणवत्त्वेनैवायोग्यत्वात्। पिशाचत्वाकाशत्वादिकं च जातिरूपतयापाद्यमानमधिकरणयोग्यतान्तर्भूतयोग्यताकं न योग्याधिकरणे घटादावयोग्यतामापादयतीति तदत्यन्ताभावस्तद्वदन्योन्याभावो वा भवत्येव प्रत्यक्षः। अत एव यत्र प्रतियोग्यधिकरणयोरन्यतरस्मिन्नन्यतरसंसर्ग आपाद्यमानोऽन्यतरस्मिन् नायोग्यतामापादयति, तत्र तदधिकरणे तदभावः प्रत्यक्षो योग्यानुपलब्ध्या भवत्येवेति योग्यानुपलब्ध्यर्थः। अर्थान्तरस्य निर्वक्तुमशक्तेः। अत एव वायावुद्भूतरूपसंसर्ग आपाद्यमानस्तत्र योग्यतामेवापादयति, उद्भूतरूपवत्त्वेनैव बहिर्द्रव्यस्य योग्यतावत्त्वादिति तदभावः प्रत्यक्ष एव। अत एव च स्तम्भेऽपि पिशाचत्वसंसर्ग आपाद्यमानस्तत्र नायोग्यतामापादयति, व्यक्तियोग्यतायां जातियोग्यताया अतन्त्रत्वात्। प्रत्युत व्यक्तियोग्यतया तत्र पिशाचत्वस्यैव योग्यतापाद्यत इति तदत्यन्ताभावस्तद्वदन्योन्याभावो वा घटादौ प्रत्यक्ष इति किमधिकं पल्लवेनेति। यद्वा, आकाशत्वादिनाकाशभेदज्ञानाभावेऽपि पृथिवीतरत्वस्य पृथिव्यन्योन्याभाववत्त्वस्य योग्यतया तेन रूपेणोपलम्भापादनसम्भवात् तेन रूपेण भेदज्ञाने बाधकाभावः। येन रूपेण यत्र यदुपलम्भापादनं, तद्रूपावच्छिन्नतदभावस्य तत्र सामग्रीसत्त्वेन प्रत्यक्षत्वात्। अत एव घटो न रूपमित्यादिसर्वसाक्षिकः प्रत्ययः। अन्यथा रूपत्वावच्छिन्नाभावस्यातीन्द्रियप्रतियोगिकतयाप्रत्यक्षत्वापातात्। तस्मादुक्तमेव नियामकमिति।

इदं तु ध्येयं — पृथिवी इतरभिन्नेत्यत्रेतरत्वेनाभावस्याप्युपस्थितेस्तदन्योन्याभावोऽपि साध्यः, न तु तेन सह स्वरूपभेदः। साध्यभेदे मानाभावात्। न

च पृथिवीतरत्वं पृथिव्यन्योन्याभाववत्त्वम् । तच्च नाभावेऽस्ति । अभावप्रतियोगिकाभावाधिकरणयोरनङ्गीकारादिति वाच्यम् । पृथिवीत्वासामानाधिकरण्यावच्छिन्नमेयत्वरूपभावाभावसाधारणाधिकरणतावच्छेदकावच्छिन्नस्याभावाधिकरणस्याप्यभावस्याङ्गीकारे बाधकाभावात् । किं बहुना, पृथिवीभिन्नसर्वविषयकबुद्धिविषयत्वरूपभावाभावसाधारणाधिकरणतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नतया जलादिवदभावस्याप्यन्योन्याभावसाधनमप्रत्यूहमेव । युक्तं चैतत् । अभावप्रतियोगिकोऽभावाधिकरणको वा नाभावोऽभ्युपेयत इत्यत्र क्लृप्तप्रतियोगिनैव क्लृप्ताधिकरणेनैवोपपत्तेर्नातिरिक्तकल्पनमित्येव बीजम् । भावाभावसाधारणधर्मावच्छिन्नाभावप्रतियोगिकाभावाधिकरणकाभावातिरिक्ताभावस्यानङ्गीकारात् । अभावेन सह (स्व)रूपभेदस्य साध्यत्वादिति मणिकृद्वचनं चाभावप्रतियोगिकाभावानङ्गीकारेऽपि नानुपपत्तिरित्यभिप्रायेणेति ।

इदं तु विचार्यते — पक्षतावच्छेदकभेद एवांशतः सिद्धसाधनमिति यन्मणिकृतोक्तं, तन्न सङ्गच्छते । पक्षतावच्छेदकाभेदेऽपि यदि तत्सामानाधिकरण्यमात्रेण सिद्धिः साध्यस्योद्देश्या, तदैकदेशे साध्यसिद्ध्यानुमितिप्रतिबन्धादंशतः सिद्धसाधनं भवत्येव । पक्षतावच्छेदकभेदेऽपि यदि समूहालम्बनानुमितिरुद्देश्या, तदा अनुमितिरेकपक्षतावच्छेदकावच्छेदेन साध्यसिद्धावप्युत्पद्यत एवेति नांशतः सिद्धसाधनमित्यंशतः सिद्धसाधने पक्षतावच्छेदकभेदो न तन्त्रं, अन्वयव्यतिरेकव्यभिचारादिति ।

अत्र मिश्राः — सिसाधयिषागर्भपक्षतामाश्रित्य नायं विचारः, किन्तु सिद्ध्यभावांशमादाय । तत्र च समानप्रकारकसिद्धेः प्रतिबन्धकत्वात् तदभावः पक्षतात्वेन हेतुरिति वाक्त्वप्रकारकानित्यत्वज्ञानस्य जातत्वात् तत्र पक्षता नास्तीति तदंशेऽनुमितिप्रतिबन्धादंशतः सिद्धसाधनं पक्षतावच्छेदकभेदाद् भवति । पक्षतावच्छेदकाभेदे तु घटत्वेनेतरभेदज्ञानेऽपि पृथिवीत्वप्रकारकसिद्ध्यभावात् पक्षता न क्षतेति नांशतः सिद्धसाधनमिति वदन्ति । वस्तुतस्तु — पृथिवीत्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे तस्याश्च घटादावेव जाततया सिद्धसाधनमेव, उद्देश्यांशासिद्धेः । अथ पृथिवीत्वावच्छेदेन साध्यसिद्धिरुद्देश्या, तदा तदसिद्ध्या नांशतः सिद्धसाधनमिति पक्षतावच्छेदकाभेदे उभयथाप्यंशतः सिद्धसाधनं नास्त्येव । यत्र तु पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरुद्देश्या, तादृशस्थले पक्षता-

वच्छेदकनानात्वे एकपक्षतावच्छेदकावच्छेदेन सिद्ध्यापरपक्षतावच्छेदकावच्छेदेना-सिद्ध्या भवत्यंशतः सिद्धसाधनमिति पक्षतावच्छेदकनानात्वं तत्र तन्त्रमुक्तं, पक्ष-तावच्छेदकैक्ये सति सिद्धसाधनादेवेति दिक् ।

यच्चोक्तं मणिकृता — घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वेनेतरभेदसंशयो भविष्यतीति, तत् समानप्रकारकत्वेनैव संशयनिश्चययोः प्रतिबन्धकत्वमभिप्रेत्य। अत एव धूमवत्त्वेन वह्निमत्त्वनिश्चयेऽपि पर्वतत्वेन वह्निसंशय उदाहृतः। यद्यप्येवं सति घटत्वेन निश्चयानन्तरं प्रमेयघटोऽस्ति न वेति संशयापातः, एवं भूतले घट इति ज्ञानानन्तरं घटवद् भूतलं न वेति संशयापातः, निश्चयस्य भिन्नप्रकारकत्वे-नाप्रतिबन्धकत्वात्। तथा च समानविषयकत्वेन प्रतिबन्धकता वाच्या। तथा च पृथिवीत्वेनापि घटे कथमितरभेदसंशयः, घटत्वेन रूपेण तन्निश्चयसत्त्वादिति। तथापि समानविषयकत्वेनापि प्रतिबन्धकताङ्गीकारे घटत्वेन निर्णयानन्तरं नीलघ-टत्वेन संशयो न स्यात्। तस्माद् यद्रूपेण निर्णयस्तद्रूपव्यापकत्वेन गृहीतो यो धर्मस्तदवच्छिन्नत्वेनोपस्थिते न संशय इति वाच्यम्। तथा च यत्र घटत्वव्यापकता पृथिवीत्वस्य न गृहीता, तादृशस्थले पृथिवीत्वेन संशयो भविष्यतीत्येतत्परोऽयं मणिः। अत एवेदंपर्वतत्वेन वह्निनिश्चये पर्वतत्वेन न वह्निसंशय इति सिद्धान्तः। पर्वतत्वस्य इदंपर्वतत्वव्यापकतया ग्रहात्। अत एव यदा पृथिवीत्वे घट(त्व)व्यापक-तापि दैवाद् गृहीता, तत्र कथं पृथिवीत्वेन रूपेण संशय इत्याक्षेपं मनसि निधाय मणिकृता पक्षान्तरमुक्तं—यद्वा घटादिभिन्नपृथिवीत्वेन पक्षतेत्यास्तां ग्रन्थविस्तरः।

नन्वेवमपि आकाशमितरेभ्यो भिद्यते आकाशत्वादित्यादिव्यतिरेकिणि सा-ध्याप्रसिद्धिर्नोद्धृतैव। नहि पृथिव्येकदेशे घटादौ साध्यप्रसिद्धिवत् तत्राप्येक-देशे तथा अस्तीति चेत्। अत्र मणिकृतः — त्रयोदशान्योन्याभावास्त्रयोदशसु प्रत्येकं प्रसिद्धाः पृथिव्यादौ साध्यन्ते। यद्वा, जलं तेजःप्रभृतिद्वादशभिन्नप्रति-योगिकान्योन्याभाववद् द्रव्यत्वात् तेजोवदिति त्रयोदशभिन्नत्वस्य सामान्यतः सिद्धौ पृथिव्यां त्रयोदशभिन्नत्वं साध्यत इति न साध्याप्रसिद्धिरित्याहुः।

अत्रोपाध्यायाः — प्रत्येकान्योन्याभावत्वमिह साध्यतावच्छेदकमुत समु-दिताभावत्वम्। नाद्यः, असाधारण्याद्, जलादिभिन्नवाय्वादेः सपक्षात् पृथिवी-त्वहेतोर्व्यावृत्तत्वात्। नान्त्यः, अभावसमुदायस्याप्रसिद्धत्वादिति प्रथमपक्षे दूष-णं समर्पयन्ति।

तत्र मिश्राः — साध्यतावच्छेदकावच्छिन्नसाध्यवद्व्यावृत्त्या नासाधारण्यं, किं त्वनुमितिविषयतावच्छेदकावच्छिन्नसाध्यवद्व्यावृत्त्या। तच्चेहाप्रसिद्धं, समुदितस्यानुमितिविषयस्यान्यत्राप्रसिद्धेरिति नासाधारण्यमिति भूषयन्ति। तच्चिन्तनीयम्। असाधारण्यं सत्प्रतिपक्षतया दोषावहम्। न च प्रत्येकं साध्यवद्व्यावृत्तत्वे तत् सम्भवति। अभावसमुदायरूपानुमितिविषयविरोधाभावादिति खलु मिश्राणामभिसन्धिः। स चायुक्तः। प्रत्येकं साध्यवद्व्यावृत्त्या प्रत्येकसाध्याभावसिद्धिसामग्र्या मिलितसाध्यसिद्धेः प्रतिबन्धनियमात्। समुदायाभावज्ञानस्य समुदायज्ञानविरोधित्वात्। किं बहुना, प्रत्येकसाध्यसाधने मिलितसिद्धिवत् प्रत्येकसाध्यवद्व्यावृत्त्या प्रत्येकाभावे साध्यमाने मिलिताभावसिद्धिरप्यनुमितिविरोधिनी दुर्वारैवेति नायं पन्थाः। तस्मादसाधारण्यं दशाविशेषे दोष इतीह विशेषदर्शनसत्त्वान्न तदवतार इत्येव समाधानम्।

वस्तुतस्तु — स्वस्वाधिकरणस्थितानामेव जलादिभेदानां त्रयोदशत्वं गृहीत्वा त्रयोदशत्वावच्छिन्नभेदाः पृथिव्यां साध्यन्ते। त्रयोदशत्वावच्छिन्नभेदवत्तया च न जलादेर्ज्ञानं, तद्भेदस्य तत्राज्ञानादिति नासाधारण्यम्। अत एव व्यतिरेकव्याप्तिग्रहोऽपि नानुपपन्नः। जलादौ व्यासज्यवृत्तित्रयोदशत्वरूपधर्मावच्छिन्नभेदाभावस्य सत्त्वात्। व्यासज्यवृत्तिधर्मस्य यत्किञ्चिदाश्रयासत्त्वेन सत्त्वाज्जलादौ स्वभेदाभावेन विशिष्टाभावसत्त्वात्। अत एव च नान्वयित्वशङ्कापि, त्रयोदशत्वावच्छिन्नभेदवतः सपक्षस्याभावादिति युक्तमुत्पश्यामः। यद्वेति द्वितीयपक्षे यद्यपि जलं तेजःप्रभृतिद्वादशभिन्नप्रतियोगिकान्योन्याभाववदित्यनेन पृथिव्यन्योन्याभावो जले सिध्यति, न तु जलान्योन्याभावः पृथिव्यामित्युद्देश्यासिद्धिः, तथापि तेजःप्रभृतिद्वादशभिन्ननिष्ठान्योन्याभावप्रतियोगित्वं तदर्थ इति भवति पृथिव्यां जलभेदस्यापि सिद्धिरिति मिश्राः।

वस्तुतस्तूक्तानुमानानन्तरं यद् यद्भिन्नं, तत् तन्निष्ठभेदप्रतियोगीति ज्ञानसहितेन मनसोत्तरकालं जलभेदोऽपि पृथिव्यां गृह्यत इति मणिकृदाशयः। वस्तुतस्तु इतरे भेदप्रतियोगिनः मेयत्वादित्यनुमानेन लाघवादेकभेदप्रतियोगित्वं विषय (इति) इतरत्वावच्छिन्नभेदः सामान्यतः प्रसिद्धः पृथिव्यां साध्यत इति न कोऽपि दोष इति प्रतिभाति।

प्राञ्चस्तु — अभावसाध्यको व्यतिरेकी कश्चित् साध्यप्रसिद्धिं विनापि सा-

धयितुं शक्यते, यत्र भावः सुप्रसिद्ध इतीहापीतरतादात्म्यजलत्वादिव्यापकतया पृथिवीत्वाभावग्रहात् तदभावरूपेण पृथिवीत्वेन तद्भेदः पूर्वाप्रसिद्ध एव सिध्यति, सामग्री(स)त्त्वादिति नान्वयित्वं, नासाधारण्यं, न व्याप्तिग्रहानुपपत्तिर्वेति वदन्ति।

अत्रेदं विचार्यते — इतरतादात्म्यजलत्वादिव्यापकतया हेत्वभावग्रहाद् हेतुना जलत्वा(द्य)त्यन्ताभावसिद्धिरस्तु। जलाद्यन्योन्याभावसिद्धिस्तु कुतः। व्यापकाभावेन व्याप्याभावस्यैव सिद्धेः, वह्न्यभावेन धूमाभाववदिति।

अत्रोपाध्यायाः — जलत्वाद्यत्यन्ताभाव एव जला(द्य)न्योन्याभावः, न तु भिन्नः, प्रमाणाभावात् क्लृप्तेनैव धर्मात्यन्ताभावेन धर्म्यन्योन्याभावबुद्ध्युपपत्तौ तन्नियामकधर्म्यन्तरकल्पनागौरवाच्चेति।

अत्र मिश्राः — धर्म्यन्योन्याभावधर्मात्यन्ताभावयोरैक्यं न घटते। तथा सति घटे पटत्वं न, घटः पटो न इति प्रतीत्योर्वैचित्र्यं न स्याद्, विषयभेदाभावात्। किञ्च, वायौ रूपात्यन्ताभावः प्रत्यक्षः, रूपवदन्योन्याभावस्तु न प्रत्यक्षः, अन्योन्याभावे योग्याधिकरणत्वस्य योग्यतावच्छेदकत्वादिति स्वोक्तिविरोधः। एकस्य योग्यत्वायोग्यत्वयोर्विरोधात्। अपि चैवं सति घटत्वात्यन्ताभावधीर्न स्याद्, घटत्वत्वरूपप्रतियोगितावच्छेदकप्रकारकधीसाध्यत्वात्। तस्य च घटेतरावृत्तित्वघटितस्य घटत्वात्यन्ताभावधीसाध्यतयात्माश्रयाज्ज्ञातुमशक्यत्वादिति समादधते।

अत्रेदं शङ्क्यते — घटे पटत्वं नेत्यत्र पटत्वसंसर्ग आरोप्यः। घटः पटो नेत्यत्र तु पटत्वमेव तादात्म्यरूपमारोप्यमित्येव भेदः। न त्वभावांशेऽपि भेदः। किञ्च, घटान्योन्याभावाभावो घटत्वमिति त्वयाप्युररीक्रियते। तथा च यो यदभावः स तदभाव इति व्याप्त्या घटत्वप्रतियोगिकत्वं तद्वदन्योन्याभावेऽवश्यमभ्युपेयमेवेति प्रतीतिवैचित्र्यं यथाकथञ्चित् समर्थनीयम्। यच्च वायौ रूपवदन्योन्याभावाप्रत्यक्षत्वेन स्वोक्तिविरोध इत्युक्तम्। तदपि न। अन्योन्याभावत्वप्रकारकप्रतीतावधिकरणयोग्यतायास्तन्त्रत्वस्य मयाङ्गीकाराद् वायौ रूपवदन्योन्याभावत्वप्रकारकप्रतीतिर्नास्तीति तद्ग्रन्थार्थाद् विरोधगन्धाभावात्। यच्चोक्तं घटत्वात्यन्ताभावधीर्न स्यादेवमिति। तदपि न। घटत्वात्यन्ताभावत्वप्रकारकज्ञान एव घटत्वत्वज्ञानस्य हेतुतया घटत्वविशिष्टज्ञानाद् घटान्योन्याभावत्वप्रकारकप्रतीत्यनन्तरं घटेतरत्वघटितघटत्वत्वज्ञानसम्भवेन घटत्वात्यन्ताभाव(त्व)प्रकारकप्रतीतेरुपपत्तेः। किं बहुना, प्रतियोगितावच्छेदकप्रकारकज्ञानमेवाभावधियं जनयतीति न नियमः। तथा सति प्रमे-

यमिह नेति मत्यनापत्तेः । किन्तु सप्रकारकप्रतियोगिज्ञानमभावधीहेतुः । तथा च घटवृत्तित्वादिरूपातिप्रसक्तधर्मप्रकारकघटत्वज्ञानादपि घटत्वात्यन्ताभावधीः सम्भवतीति न घटेतरावृत्तित्वज्ञानं नियमतोऽपेक्ष्यत इत्यलमतिविस्तरेणेति ।

अत्र नव्याः — यदि धर्मात्यन्ताभावधर्म्यन्योन्याभावयोरैक्यं, तदा वृक्षे संयोगाभाववत् संयोगवदन्योन्याभावोऽप्यस्तीति भेदाभेदापत्त्या सिद्धान्तव्याकोपः, भेदस्य स्वरूपभेदव्याप्यतया तस्य द्वित्वादिसङ्ख्योत्पत्तिनियामकतया द्वाविति बुद्धिप्रसङ्गश्चेति वदन्ति । तच्चिन्त्यं — सिद्धान्तव्याकोपस्यापि युक्त्यभावेन धर्मिद्वयकल्पनागौरवेण च सोढव्यत्वात् । अत्यन्ताभावविशेषवदन्योन्याभावविशेषस्यैव स्वरूपभेदव्याप्यत्वाच्चैकस्मिन् वृक्षे द्वित्वाद्यनुत्पत्तेरित्यस्यापि वक्तुं शक्यत्वादिति ।

अत्रेदं प्रतिभाति — वस्तुभेदे सर्वत्र प्रतीतिरेव प्रमाणम् । सा च यथा घटपटयोरयं घटः, अयं पट इत्याकारा विलक्षणेति तयोर्भेदः, तथा घटत्वात्यन्ताभावे घटत्वप्रतियोगिकतया घटान्योन्याभावे घटप्रतियोगिकतयानुभूयमाने विलक्षणेति कथं तयोर्न भेदः । अन्यथा घटप्रतियोगित्वानुभवो भ्रा(न्तः? न्तिः) स्यात् । न चेष्टापत्तिः । प्रमात्वेनैवोपपत्तौ भ्रमत्वाकल्पनात् । न चात्यन्तान्योन्याभावयोर्धर्मिणोर्भेदकल्पनागौरवात् प्रतीतेर्भ्रमत्वं कल्प्यमिति वाच्यम् । एवं सति घटपटयोरपि भेदो न स्याद्, वैलक्षण्यप्रतीतेरुक्तक्रमेण भ्रमत्वकल्पनात् । धर्मिद्वयकल्पनागौरवस्य प्रतीतिबलात् प्रामाणिकत्वमिति यदि, तदा प्रकृतेऽपि तुल्यम् । न च यो यदभावः स तदभाव इति व्याप्त्या घटत्वाभावो घटान्योन्याभाव इति वाच्यम् । तादात्म्यसम्बन्धावच्छिन्नघटस्यैव घटान्योन्याभावाभावरूपतया घटत्वस्य तदभावरूपत्वाभावात् । किञ्च, सहभावनियतधर्मात्यन्ताभावधर्म्यन्योन्याभावयोरैक्ये तथाभूतवस्तुद्वयोच्छेदः सर्वत्र प्रसज्येत । विलक्षणप्रतीत्योरपि त्वदुक्तरीत्या ध(र्म? र्मि)द्वयकल्पनागौरवेण वस्तुद्वयाव्यवस्थापकत्वात । व्यवस्थापकत्वे प्रकृतेऽपि स्यादिति दिक् ।

नन्वेवं सति प्रकृते कथं जलाद्यन्योन्याभावसिद्धिरित्याक्षेपस्य कथं परिहार इति चेद्, इत्थं — तादात्म्यरूपसम्बन्धेनेतरं प्रति व्यापकतया पृथिवीत्वाभावग्रहात् तदभावरूपेण पृथिवीत्वेन तादात्म्यसम्बन्धावच्छिन्नेत(र? रा)भावस्य सिद्धेः । यत्सम्बन्धावच्छिन्नव्यापकतया यद्ग्रहः, तत्सम्बन्धावच्छिन्नाभावस्यैव तदभावेनानुमितेः स एवान्योन्याभाव इति नानुपपत्तिः । किञ्च, यद्व्यापकतया

हेत्वभावग्रहः, तद्विरोध्यभावस्तद्धेतुना सिध्यतीति प्रत्यक्षमणिसारे व्युत्पादितम् । तथा च जलत्वा(द्य)त्यन्ताभाववद् जलाद्यन्योन्याभावोऽपि जलत्वादिविरोध्यवश्यं सिध्यतीति सङ्क्षेपः । व्यतिरेक्युदाहरणस्थलान्तरं चातिविस्तारभिया नेह विशिष्य विविच्यत इति वेदितव्यम् ॥

इति व्यतिरेकिग्रन्थः ।

---

## अथार्थापत्तिनिरासः ।

एवं व्यतिरेकिणि निरूपितेऽर्थापत्तिर्नानुमानान्तर्भूतेति भट्टादिमतमपास्तम् । अर्थापत्तेरपि केवलव्यतिरेक्यनुमानरूपत्वात् । नन्विदमयुक्तं — ज्योतिःशास्त्रोदितलिङ्गादिना देवदत्तः शतवर्षजीवीति ज्ञात्वा प्रत्यक्षेण जीवी गृह एवेत्यवधार्य योग्यानुपलब्ध्या च गृहे नास्तीति यत्र निश्चितं, तत्र जीवित्वग्राहकगृहसत्त्वनियमग्राहकप्रमाणयोर्विरोधे इदं वा प्रमाणमिदं वेति संशयात् स जीवति न वेति संशयः, तदनन्तरं जीवनकल्पने लाघवावतारे ज्योतिःशास्त्रप्रामाण्यरक्षादिरूपतर्कावतारे च जाते जीवनोपपादकबहिःसत्त्वं तत्र कल्प्यते । तत्र प्रमाणसहकारिता तर्कस्य, तच्चान्यत्रेति प्रमाणद्वयविषयकप्रामाण्यसंशयस्य तज्जन्यजीवनादिसंशयस्य वा सहकारी स इति संशयकारणिकार्थापत्तिरवश्यमङ्गीकार्या, अनुमितिसामग्रीविरहादिति चेत् । अत्र वदन्ति — 'प्रमाणयोरनयोरेकं बाध्यं, विरुद्धार्थग्राहित्वादि'ति सामान्यतो दृष्टमवश्यमुभयसिद्धावतारमुररीकार्यम् । अन्यथार्थद्वयकल्पनाप्रसङ्गात् । तथा चात्रानुमाने जीवनतर्कादिसहकृते गृहनियमग्राहिणो बाध्यत्वं विषय इति निष्परिपन्थिजीवनग्राहिप्रमाणाज्जीवित्वलिङ्गनिश्चयाद् अनुमान एव बहिःसत्त्वं ज्ञायते देवदत्तो बहिरस्ति जीवित्वे सति गृहासत्त्वादिति (कथङ्कृत)मर्थापत्त्या ।

नन्वनयोरेकं प्रमाणमिति ज्ञानानन्तरं जीवनादिसंशयानन्तरं च यत्र तर्कावतारस्तत्र तदा सामान्यतो दृष्टावतारस्य नष्टत्वात् संशयसहकार्येव तर्क इति कुतो नार्थापत्तिर्मानमिति चेद्, न । संशयानन्तरमपि तर्कावतारो विमर्शसाध्य इति किञ्चिद् विलम्बावश्यकत्वे पुनः संशयस्त्वयापि कल्प्यः । तद् वरं क्लृप्तप्रमाणभावस्य सामान्यतो दृष्टस्यैवावतारः कल्प्यतां, किमर्थापत्त्या मानान्तरेण ।

एवमनुपपत्तिकर(णता?णा)प्यर्थापत्तिरपास्ता । जीविनो गृहासत्त्वं बहिःसत्त्वं विनानुपपन्नं तत् कल्पयतीति हि सा । सा च पूर्वानुमानेनैव गतार्था । ननु गृहेऽभावनिश्चयो बहिःसत्त्वं देवदत्ते कथमनुमापयतु, व्यधिकरणत्वात् । पक्षधर्मताज्ञानस्यानुमापकतायां तन्त्रत्वात् । न च गृहनिष्ठाभावप्रतियोगित्वं देवदत्तवृत्ति तत्र बहिःसत्त्वानुमापकमिति वाच्यम् । तस्य ग्रहणानियमादिति चेद् । अत्राहुः—गृहे देवदत्तस्याभाव इति ज्ञाने षष्ठ्यर्थसम्बन्धस्य प्रतियोगित्वस्य प्रकारतया गृहनिष्ठाभावप्रतियोगित्वस्य लिङ्गस्यावश्यमुपस्थानादनुमानप्रवृत्तिरिति न सामग्रीदुर्भिक्षमिति नार्थापत्तिस्तद्बहिर्भूतेति ।

अत्रेदमालोचयामः—गृहे देवदत्तस्याभाव इत्यत्र षष्ठ्यर्थप्रतियोगित्वरूपसम्बन्धभानेऽपि प्रतियोगित्वत्वभाने मानाभावः । षष्ठ्याः सम्बन्धत्वेनैव सम्बन्धोपस्थापकत्वात् । अन्यथा नानार्थत्वप्रसङ्गात् । किञ्च, गृहे देवदत्तो नेति ज्ञानस्थलेऽनुमितिसामग्र्यसम्भव एव । संसर्गमर्यादया प्रतियोगित्वरूपलिङ्गस्य भानेऽपि प्रतियोगित्वत्वरूपलिङ्गतावच्छेदकप्रकारकज्ञानस्यानुमितिहेतोरसम्भवात् । न च बहिःसत्त्वं विना गृहनिष्ठाभावप्रतियोगित्वमनुपपन्नमिति ज्ञानमर्थापत्तिवादिनापि हेतुतया वाच्यं, तथा च प्रतियोगित्वत्व(रूप?)प्रकारकज्ञानमुभयसमाधेयमिति वाच्यम् । गृहे देवदत्ताभावो देवदत्ते बहिःसत्त्वं विनानुपपन्न इति ज्ञानस्यार्थापत्तिवादिना हेतुत्वेनाङ्गीकारेण तन्मते प्रतियोगित्वत्वप्रकारकज्ञानानावश्यकत्वात् । न च संसर्गमर्यादया प्रतियोगित्वभानानन्तरं मानसं तत्प्रकारकज्ञानमस्तु, प्रमाणान्तरकल्पनातो लाघवादिति वाच्यम् । सामग्रीबलेन प्रमाणान्तरसिद्धावीदृग्गौरवस्य फलमुखत्वेनादोषत्वात् । अन्यथोपनीतभानेनान्यथासिद्धमनुमानमपि मानान्तरं न स्यात् । अनुमिनोमीत्यनुव्यवसायवदर्थापयामीत्यनुव्यवसायस्यात्रापि सत्त्वात् । एवञ्च यदोपरि सविता तदा भूमेरालोकवत्ता, यदा नद्यां पूराधिक्यं तदा तत्पूर्वदेशे वृष्टिरित्यादिसर्वमर्थापत्तिरेव । व्यधिकरणेनानुपपत्तेरर्थापत्तित्वात् । अत्र च सामानाधिकरण्यज्ञानाजन्यतयानुमितित्वजातेरभावात् । एवमिह साध्याधिकरणवृत्तिताज्ञानमनपेक्षितमित्यनुमित्यपेक्षया वैलक्षण्यम् । तस्मादनुमानं *सामानाधिकरण्येनावश्यम्भावधीः, अर्थापत्तिश्च व्यधिकरणेनावश्यम्भावधीरिति परस्परवैलक्षण्यात् तयोर्वैलक्षण्यमिति पृथक् प्रमाणमेवार्थापत्तिरिति ।

---

* 'समानाधिकरणेन' इति वा स्यात् ।

अत्रेदं तत्त्वम् — अनुमितिस्थलेऽप्यवश्यम्भावधीर्हेतुरस्तु, न तु सामानाधिकरण्यधीः। तथा चानुमितिवैलक्षण्यं नागतमेवेति न पृथक् प्रमाणमेवार्थापत्तिः। यत्राधिकरणे यत्सत्ता यत्र यत्सत्तां विना न सम्भवति, तदधिकरणे तज्ज्ञानं तस्मिन्नधिकरणे तत्सत्त्वं ज्ञापयतीत्येव समानाधिकरणव्यधिकरणानुपपत्तिसाधारणमनुमितिकारणमिति सर्वत्राप्यनुमितेरेवोदयात्। भूमावालोक उपरि सवितारं विनानुपपन्नः तं व्यधिकरणमेव गमयति, धूमस्तु स्वाधिकरणे धूमध्वजं विनानुपपन्नः तत्र स्वाधिकरणे तं बोधयति। उक्तसामग्र्या उभयसाधारण्यात्। यदि च सामानाधिकरण्यधीर्हेतुत्वे दुराग्रहः, तदापि नानुपपत्तिः। साक्षात्परम्परासाधारणसम्बन्धेन सर्वत्र तत्सत्त्वात्। न चातिप्रसङ्गः। यत्राधिकरणे यत्सत्त्वमित्याद्युक्तविशेषसामग्रीत एव तद्भङ्गात्। नहि पर्वते वह्निं न साक्षात्करोमीतिवद् अत्र नानुमिनोमीत्यनुव्यवसाय इति जिगीषामन्तरेण वक्तुं शक्यते, येनात्रापि यथाकथञ्चिन्मानवैलक्षण्यं कल्पनीयमिति युक्तमुत्पश्यामः।

इत्यर्थापत्तिनिरासः।

---

## अथ न्यायलक्षणम्।

तच्चेदमनुमानं पराहङ्कारशामकं न्यायतदवयवद्वारेति न्यायस्तदवयवाश्च निरूप्यन्ते — तत्रानुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञान(जन)कवाक्यं न्याय इति मणिकृतः।

अत्र मिश्राः — अनुमितौ कर्तव्यायां स्वोत्तरोत्पत्तिकज्ञानान्तरानपेक्षत्वं तच्चरमकारणत्वं, तद्वान् यः परामर्शः, तज्जनकजनकं यच्छाब्दज्ञानं, तज्जनकवाक्यत्वं लक्षणार्थः। तेन परामर्शे जातेऽपि कामिन्याद्युत्कटवस्तुजिज्ञासायामनुमित्यनुत्पादाद् नानुमितिचरमकारणं तदिति दूषणं परास्तम्। प्रतिबन्धकाभावापेक्षणेऽप्युक्तचरमकारणत्वस्य तत्राबाधात्। अनुमितिचरमकारणपदप्रयोजनं चोपनयान्ते चतुरवयवे न्यायत्वं मा प्रसाङ्क्षीदित्येतदर्थम्। अनुमितिचरमकारणत्वं च तत्र नास्ति, अबाधितत्वाद्यविषयकत्वाच्चतुरवयवप्रयोज्यपरामर्शस्य। अबाधितत्वादिविषयकस्यैव तस्य चरमकारणत्वात्। चरमकारणता च परामर्श-

स्यैवेति तदुपात्तं, न तु तद्व्यवच्छेदक(त्व?)म्। तज्जनकजनकतापर्यन्तमसम्भवापनुत्तये। अन्यथानुमितिचरमकारणपरामर्शजनकीभूतं मानसज्ञानं, शाब्दं नेति तज्जनकवाक्यत्वमसम्भव्येव स्यात्। यथा च शाब्दज्ञानमेवाहत्य चरमकारणपरामर्शं जनयति, तथा वक्ष्यते। शाब्दज्ञानपदं तु 'नायमाभासः, तल्लक्षणायोगादि'ति न्यायबहिर्भूतकण्टकोद्धारवाक्यातिव्याप्तिवारणाय। तदपि चरमकारण(क?)परामर्शजनक(जनक)योग्यताजनकमेव। न च शाब्दमपि तज्ज्ञानं भवत्येवेत्यतिव्याप्तिस्तदवस्थैवेति वाच्यम्। शाब्दज्ञानत्वेन तत्प्रयोजकत्वस्य विवक्षितत्वात्। न्यायजन्यज्ञानस्य शाब्दज्ञानत्वेनैव तथात्वात्। कण्टकोद्धारजन्यज्ञानस्य च योग्यताज्ञानत्वेनैव तत्प्रयोजकत्वाच्छाब्दमशाब्दं वा भवत्वित्यत्र न कश्चिद् विशेषः। वाक्यपदं चाप्तोक्ते वह्निव्याप्यवानयमबाधिताग्निरिति वाक्यावयवावयवेऽतिव्याप्तिवारणाय। तदर्थश्च वाक्यान्तराघटकवाक्यत्वमिति नातिव्याप्तिः। नन्वेवमपि, पर्वते वह्निः, धूमो यतः, धूमश्च वह्निमन्मात्रवृत्तिः, अतस्तादृशधूमे पर्वतवृत्तित्वं, तस्मादस्ति पर्वते वह्निरित्यादिन्यायसमानार्थकन्यायानात्मक(त्व?)वाक्येऽतिव्याप्तिरिति चेद्, न। तत्र सर्वसम्प्रदायमवमत्यानेन कृत इत्थं प्रयोग इति विरोधिजिज्ञासया परामर्शानुत्पादात् तत्प्रयोजकत्वगर्भलक्षणाभावेनातिव्याप्तिनिरासादिति तात्पर्यं वर्णयन्ति।

अत्र नव्याः—न्यायजन्यज्ञानस्यापि विशेषणज्ञानत्वेनैव परामर्शं प्रति प्रयोजकत्वं, न तु शाब्दत्वेनेत्यसम्भवः। न चान्वयव्यतिरेकाभ्यां वादिनस्तथाविधपरामर्शं प्रति शाब्दत्वेनैव प्रयोजकत्वम्। तथा सति कृतसमयवाद्युक्तप्रयोगप्रयोज्यपरामर्शं प्रति कण्टकोद्धारजन्यज्ञानस्यापि शाब्दज्ञानत्वेनैव प्रयोजकत्वमित्यतिव्याप्तितादवस्थ्यात्। किञ्च, पर्वते वह्निः, धूमो यत इत्यादिन्यायसमानार्थके वाक्येऽतिव्याप्तिस्तदवस्थैव। न च प्रागुक्तरीत्या तद्वारणम्। सभाक्षोभादिना तादृशसंप्रदायविस्मरणे विरोधिजिज्ञासानुत्पादेन तादृशवाक्यस्यापि परामर्शप्रयोजकशाब्दज्ञानजनकतानपायादतिव्याप्तेर्वज्रलेपत्वादिति।

अत्रेदं प्रतिभाति—सम्प्रदायाभिज्ञासम्भ्रान्तवादिप्रयोगप्रयोज्यपरामर्शत्वावच्छिन्नप्रयोजकं यच्छाब्दज्ञानं, तज्जनकवाक्यत्वं विवक्षितम्। कण्टकोद्धारवाक्यं तु न तथा। समयमन्तरेण वादप्रवृत्तौ तज्जन्यशाब्दज्ञानं विनाप्युक्तपराम‍र्शोत्पत्त्योक्तपरामर्शत्वावच्छिन्नप्रयोजकज्ञानजनकताविरहात्। एवं न्यायसमाना-

र्थकवाक्येऽप्यतिव्याप्तिरपास्ता । सम्प्रदायाभिज्ञासम्भ्रान्तस्य तादृशवाक्यश्रवणाद् विरोधिजिज्ञासया परामर्शानुत्पादात् । अत एवाबाल्यं न्यायसमानार्थकवाक्य एव व्युत्पन्नो यस्तस्य विरोधिजिज्ञासानुत्पत्त्यातिव्याप्तिरिति निरस्तम् । तस्य सम्प्रदायानभिज्ञत्वात् । तत् प्रति तन्न्यायत्वस्येष्टापत्तिपराघातादापादयितुमशक्यत्वादित्यपि कश्चित् ।

इदं तु शङ्क्यते — तादृशपरामर्शप्रयोजकत्वं फलोपधानं स्वरूपयोग्यता वा । नाद्यः । दैवात् प्रतिबन्धादिवशाद् यत्र न परामर्शोत्पादः, तत्र न्यायलक्षणाव्याप्तेः । नान्त्यः । स्वरूपयोग्यतावच्छेदकापरिचयात् । परिचये च तदेव लक्षणमस्तु । किमनेन । किञ्च, प्रतिज्ञादिष्ववयवेष्वतिव्याप्तिः । वाक्यसमुदायरूपस्य न्यायस्य समुदायिप्रतिज्ञाद्यनतिरिक्तत्वात्, तज्जन्यज्ञानस्य प्रतिज्ञादिजन्यत्वादिति ।

अत्र ब्रूमः — वाद्युक्तप्रयोगस्थलीयपरामर्शव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगिज्ञानजनकतापर्याप्त्यधिकरणत्वं विवक्षितम् । तच्च कचित् परामर्शानुत्पादेऽप्यस्त्येवेति नाव्याप्तिः । प्रत्येकावयवानां च तादृशज्ञानजनकतापर्याप्त्यधिकरणत्वं नास्तीति न प्रत्येकावयवातिव्याप्तिरिति दिक् । एतल्लक्षणेन प्रतिज्ञादिवाक्यपञ्चकत्वमुपलक्ष्यत इति केचित् । तन्न । प्रतिज्ञादिवाक्यस्य न्यायघटितत्वेनात्माश्रयादिदोषप्रसङ्गात् । आकाङ्क्षा(प्र?)क्रमोक्तवाक्यपञ्चकत्वमुपलक्ष्यत इत्यपरे । तदपि न । पर्वते वह्निरित्यादिवाक्यपञ्चकातिव्याप्तेः, प्रतिज्ञावाक्यस्याकाङ्क्षाक्रमं विनाप्यभिधानाच्चेति ।

ननु न्यायजन्यज्ञानं साक्षादेवानुमितिचरमकारणपरामर्शं जनयतु, किं मध्ये ज्ञानान्तरेण । एवं च लक्षणे जनकत्वमेव प्रवेशयितुमुचितं, न तु जनकजनकत्वमिति चेद् । अत्र मिश्राः— न्यायजन्यज्ञानस्य वादिवाक्यजन्यतया नित्यमप्रामाण्यशङ्काकलङ्किततया विशिष्टवैशिष्ट्यबोधे न सामर्थ्यमिति तेन पदार्थोपस्थितिरूपेण धूमविशिष्टे वह्निवैशिष्ट्यमित्यादिज्ञानं व्याप्त्यादिविषयकं जन्यते । तेन विशिष्टवैशिष्ट्यावगाहिपरामर्श उत्पद्यत इति न्यायजन्यज्ञानं परामर्शप्रयोजकमेव न तु तज्जनकमिति नानुपपत्तिरिति वदन्ति ।

अत्र शङ्क्यते — अप्रामाण्यसंशयोऽपि धर्मिज्ञानकोट्युपस्थित्यादिसाध्यतया सर्वत्र नावश्यक इति यत्रैव न धर्म्यादिधीः, तत्र तदभावेन न्यायजन्यज्ञाना-

दनुमितिचरमकारणपरामर्श एव साक्षादुत्पाद्यतां, किमन्तरा विशिष्टवैशिष्ट्यानवगाहिपरामर्शस्वीकारेण। न चैवं शाब्दपरामर्श एवानुमितिहेतुरस्तु। व्याप्तिविशिष्टलिङ्गे पक्षवैशिष्ट्यावगाहिपरामर्शस्यानुमितिहेतोः शाब्दरूपत्वाभावान्मानसपरामर्शस्वीकारात्। उदाहरणोपनीतव्याप्तेरुपनयोपनीतपक्षधर्मतायाश्चैकत्र द्वयमिति न्यायेन न्यायजन्यपरामर्शेन विषयीकरणात् तस्य विशिष्टवैशिष्ट्यानवगाहित्वात्। न चोपनयावयवोपनीतव्याप्तिविशिष्टपक्षधर्मत्वं कुतो न विषयीकरोति तदिति वाच्यम्। उपनयस्योदाहरणोपनीतव्याप्त्यंशेऽनुवादरूपतया तदुपनायकत्वाभावात्। अननुवाद्यस्य वाक्योपनेयत्वाद् इत्युपाध्यायमतमेव रमणीयामिति।

अत्रेदं प्रतिभाति — न्यायजन्यज्ञानेऽप्रामाण्यशङ्काविरहे तत एवानुमित्युत्पत्तौ मानसः परामर्शः सर्वथा व्यर्थ एव। न चोक्तगत्या तत्सार्थकता। अवान्तरवा(क्यस्यो?क्यार्थस्यो)पस्थितत्वमात्रस्यैव महावाक्यार्थबोधविषयतायां तन्त्रत्वाद्, अननुवाद्यत्वस्य तत्प्रवेशे गौरवात्। न चैवमनुवाद्यस्यापि वाक्यप्रतिपाद्यत्वे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यत्र लौहित्यवदुष्णीषस्यापि सोष्णीषा इति वाक्यान्तरप्राप्तस्य प्रतिपाद्यत्वापत्तिरिति वाच्यम्। लोहितोष्णीषा इति वाक्यजन्यप्रतीतिविषयत्वस्य प्रतिपाद्यत्वस्य लौहित्यवदुष्णीषेऽपि सत्त्वेन तदापादनस्येष्टापत्तिपराहतत्वात्। तद्वाक्यतात्पर्यविषयत्वलक्षणप्रतिपाद्यत्वस्य त्वन्यतः प्राप्ते उष्णीषे लौहित्यवदभावात्। तस्मादुपाध्यायमतं न साधु। मिश्रमतमप्यप्रामाण्यशङ्काक्रान्तत्वस्य परामर्शेऽनावश्यकतया क्वाचित्कपरमेव। तथा च क्वचिन्न्यायजन्यपरामर्शात् साक्षादेवानुमितिहेतुपरामर्शोत्पत्तिः, क्वचिन्मध्यवर्तिमानसपरामर्शजनकद्वारा। तथा चानुमितिचरमकारणपरामर्शव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वं जनकजनकसाधारणं लक्षणं विवक्षितमिति पक्षधरमिश्राभिप्रायः।

नन्वेवमपि, यत्राप्रामाण्यशङ्काविरहेण न्यायजन्यपरामर्शादेवानुमितिः, तत्र न्याये लक्षणमिदमव्याप्तमेवेति चेद्, अत्र ब्रूमः — वादिप्रतिवाद्यापन्नानुमितित्वावच्छिन्नं प्रति जनकत्वप्रयोजकत्वान्यतरवद् यच्छाब्दज्ञानं, तज्जनकत्वस्य लक्षणार्थत्वात्। तच्च साक्षादनुमितिजनकत्वात् तज्जनकपरामर्शप्रयोजकत्वाद् वेति न किञ्चिदनुपपन्नम्। नव्यास्तु — शब्दपरामर्शस्याबाधितत्वादिविषयकत्वाभावेन ततो नानुमितिः, किन्तु मानसोऽबाधितत्वादिविषयकपरामर्शोऽवश्यं वाच्य एवेत्याहुः।

इदं तु विचार्यते — ईश्वरास्तित्वज्ञानवतो नैयायिकस्य तन्नास्तित्वबोधकवादिवाक्यादन्वयबोध एव न, अयोग्यतानिर्णयसत्त्वात् । तथा च शाब्दज्ञानजनकत्वं कथं न्यायलक्षणमिति ।

अत्रोच्यते — मदीयं येनेश्वरसत्त्वज्ञानं प्रमाणेन जनितं, तदेतदीयनास्तिताबोधकप्रमाणाद् दुर्बलं बलीयो वेति संशयेनाहितात् स्वज्ञानाप्रामाण्यसंशयादास्कन्दितं तदयोग्यताज्ञानं शाब्दज्ञानप्रतिबन्धाय न प्रभवतीति शाब्दज्ञानं न्यायवाक्यादुत्पद्यत एव । बाधकाभावात् ।

नव्यास्तु — बाधस्यानाहार्यज्ञानविरोधितया प्रत्यक्षादिवदनाहार्यशाब्दादिविरोधित्वेऽपि वादिवाक्यादाहार्यशाब्दज्ञाने बाधकाभावः । एवं सत्प्रतिपक्षादावप्याहार्यानुमितिद्वयमुत्पद्यत एवेति समादधते ।

नन्विदमनुपपन्नम् । प्रत्यक्षे भिन्नरूपेण बाधस्य विरोधित्वमिति तन्नानाहार्यप्रत्यक्षत्वस्य तत्प्रतिबध्यतावच्छेदकत्वेऽपि परोक्षत्वरूपबाधसामान्यप्रतिबध्यतावच्छेदकेऽनाहार्यत्वविशेषणे मानाभावात् कथमाहार्यं परोक्षं बाधे सत्युत्पद्यतामिति चेद्, अत्र प्रतिभाति — साक्षात्का(रि?र)निर्णये साक्षात्का(रि?र)बाधत्वेन, साक्षात्का(रि?र)निर्णयान्यज्ञाने बाधत्वेनावश्यं प्रतिबन्धकता वाच्या । अन्यथा संशयसाधारणप्रतिबध्यतावच्छेदकालाभप्रसङ्गात् । तत्र विरोधिज्ञानमात्रस्यानुमित्यादिवत् प्रतिबन्धकत्वात् प्रत्यक्षान्तरसाधारण्यविरहात् । तथा चा(हा)र्यसंशयानुरोधाद् द्वितीयप्रतिबध्यतावच्छेदकेऽप्यनाहार्यत्वविशेषणमावश्यकमिति बाधे सत्यप्याहार्यशाब्दज्ञाने बाधकाभाव इति ।

इदं तु चिन्त्यं — शाब्दज्ञानं प्रति योग्यताधीर्हेतुरिति कथमयोग्यतानिर्णये सति शाब्दधीः, योग्यताज्ञानविरहात् । न चाहार्ययोग्यताज्ञानादेवाहार्यशाब्दधीरिति वाच्यम् । विशेषसामग्रीकल्पने मानाभावात् । फलस्याप्यानिर्णयात् । न च लाघवाद् योग्यताज्ञानमेव हेतुः, तच्चाहार्यसाधारणमिति वाच्यम् । एवं सत्याहार्ययोग्यतानिर्णयादनाहार्यशाब्दधीप्रसङ्गात् । तस्मादाहार्यनिर्णयभिन्नयोग्यताज्ञानत्वेनानाहार्यशाब्दधीहेतुत्वमङ्गीकार्यम् । तत्र लाघवाच्छाब्दधीत्वमेव तत्कार्यतावच्छेदकमस्तु । न त्वाहार्ययोग्यताज्ञानत्वेनाहार्यशाब्दज्ञानहेतुता, प्रमाणाभावाद् गौरवाच्चेति दिक् ।

अनुमितिचरमकारणपरामर्शप्रयोजकशाब्दज्ञानजनकस्वरूपयोग्यतावच्छेद-

कावाच्छिन्नवाक्यत्वं लक्षणम् । तच्च बाधादिवशादजनितान्वयबोधेऽप्यस्त्येवेति नानुपपत्तिः । योग्यतावच्छेदकं तु प्रतिज्ञादिपञ्चकगोचरधीविशेष्यतापर्याप्त्याधिकरणत्वमिति वस्तुगतिरिति सङ्क्षेपः ॥

इति न्यायलक्षणम् ।

---

## अथावयवलक्षणम् ।

अवयवलक्षणं तु न्यायजन्यज्ञानजनकशाब्दज्ञानजनकवाक्यत्वम् । न च न्यायावयवप्रतिज्ञाद्यवयवातिव्याप्तिः । तस्य न्यायजन्यज्ञानजनकशाब्दज्ञानाजनकतया तज्जनकत्वाभावादिति केचित् । तन्न । प्रतिज्ञाजन्यज्ञानस्य तदवयवजन्यत्वात् समुदायिभिन्नसमुदायाभावादतिव्याप्तितादवस्थ्यात् । तस्माद् न्यायभिन्नवाक्यान्तराघटकवाक्यत्वं विवक्षितम् । तच्चावयवावयवे नास्तीति नातिव्याप्तिः । अवयवावयवस्यावयवघटकत्वादिति नव्याः । तदपि न भव्यम् । न्यायान्तर्भूतावयवद्वयरूपवाक्यघटकतयावयवेऽप्येतल्लक्षणासत्त्वात् । किञ्च, न्यायजन्यज्ञानजनकयोग्यताज्ञानजनके कण्टकोद्धारवाक्येऽतिव्याप्तिः । न च यज्जन्यज्ञानस्य वाक्यजन्यज्ञानत्वेन न्यायजन्यज्ञानजनकता, तत्त्वं विवक्षितम् । अत एव वाक्यपदमपि । योग्यताज्ञानस्य च न वाक्यजन्यज्ञानत्वेन तथात्वमिति वाच्यम् । शाब्दज्ञानपदेनैव तदर्थलाभे वाक्यपदानर्थक्यप्रसङ्गात् । भवतु वा यथाकथञ्चित् तद्दोषोद्धारः । अवयवावयवातिव्याप्तिर्दुरुद्धरा । न च न्यायजन्यज्ञानजनकजनकतापर्याप्त्यधिकरणत्वं लक्षणार्थः । तच्च नावयवावयवे, किन्तु समुदित इति नातिव्याप्तिरिति वाच्यम् । तथा सत्यसम्भवापातात् । न्यायजन्यज्ञानजनकजनकतायाः प्रतिज्ञादिष्वपर्याप्तेरिति ।

तस्मादिदमत्र तत्त्वं — न्यायान्तर्भूतप्रतिज्ञादिपञ्चकस्य परस्परसाकाङ्क्षत्वमिति सर्वसिद्धम् । तथा च न्यायान्तर्भूतप्रतिज्ञादिपञ्चकपरस्पराकाङ्क्षापर्याप्त्यधिकरणत्वं लक्षणम् । अवयवावयवे च न तथा, प्रत्येकाकाङ्क्षायाः प्रत्येकावयव एव पर्याप्तेः । यद्वा, प्रतिज्ञादिपञ्चकप्रतियोगिकान्योन्याभाववत्प्रतियोगिकान्योन्याभाववत्त्वं प्रतिज्ञादिपञ्चकविशेष्यकधीविशेष्यतावच्छेदकधर्मवत्त्वं (वा) लक्षणम् । तच्च प्रतिज्ञात्वादिकमेवेति न कोऽपि दोष इति दिक् ॥

इत्यवयवलक्षणम् ।

---

## अथ प्रतिज्ञाग्रन्थः ।

अवयवाश्चोदाहरणान्तास्त्रय इति मीमांसकाः । उदाहरणोपनयौ द्वाववयवाविति बौद्धाः । आकाङ्क्षाक्रमानुरोधाद् अवयवपञ्चकमिति वृद्धाः । ते च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । तत्र प्रतिज्ञात्वं न्यायघटकत्वे सत्यनुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकपदसमुदा(यः ? यत्वम्) । प्रतिज्ञैकदेशे च समुदायत्वाभावान्नातिव्याप्तिः । सत्यन्तेनोदासीनप्रतिज्ञासमानाकारवाक्यव्युदासः । पाषाणमयः पर्वतो वह्निमानित्यत्र पक्षोपस्थापकपदसमुदायेऽनुमित्यनतिरिक्तविषयकशाब्दज्ञानजनकेऽतिव्याप्तिवारणायान्यूनपदम् । न चावयवान्तरस्य पक्षतावच्छेदकाबोध(क)तयानुमित्यन्यूनपदादेव वारणेऽनुमित्यनतिरिक्तपदवैयर्थ्यमिति वाच्यम् । सर्वनामपदस्य बुद्धिस्थप्रकारवाचितया तस्मादयं वह्निमानित्यत्र पर्वतत्वप्रकारकबोधादतिव्याप्त्यानतिरिक्तपदस्यावश्यकत्वात् । न चैवमपि अयं वह्निमान् इति निगमनैकदेशातिव्याप्तिस्तदवस्थैवेति वाच्यम् । निगमनैकदेशान्यत्वस्यापि विशेषणत्वात् । न च प्रतिज्ञायां ज्ञानलक्षणयानुमित्यनतिरिक्तविषयकज्ञानजनकत्वासत्त्वादसम्भव इति वाच्यम् । तत्रापि प्राथमिकबोधस्य मुख्यार्थविषयकस्य (ज्ञानस्य ? जनक)तयैव लक्षणस्य नेयत्वात् । हेत्ववयवग्रहणानन्तरं चानुपपत्त्योत्तरकालं ज्ञानलक्षणाकल्पनात् ।

इदं तु शङ्क्यते — मेयत्वं सर्ववृत्ति केवलान्वयिधर्मत्वादित्यादिप्रतिज्ञायामव्याप्तिः । तत्र सर्वस्यैवानुमितिविषयतया तदतिरिक्ताप्रसिद्धेरिति ।

अत्राहु :—अनुमितिविषयतासमव्याप्तिविषयताकत्वमन्यूनानतिरिक्तविषय(कत्वे ? केत्यने)न विवक्षितमिति न काप्यप्रसिद्धिर्न वातिव्याप्तिरिति । नन्वेवमपि व्यतिरेकिप्रतिज्ञायामव्याप्तिः । अनुमितेः साध्याभावाभावत्वप्रकारकतया प्रतिज्ञाया न्यूनविषयकत्वादिति चेत् । तत्र प्रतिज्ञाया अपि नेदं निरात्मकं जीवच्छरीरमित्येवमाकाराया एव प्रयोगात् । क्वचित् तथाप्रयोगस्तु व्यतिरेकसहचारादन्वयव्याप्तिग्रहाभिप्रायेणेति द्रष्टव्यम् । यद्वा, यन्न्यायावयवत्वावच्छेदेन लिङ्गविषयकशाब्दज्ञानजनकतानियमः, तदन्यन्यायावयवत्वं प्रतिज्ञात्वमिति क्वापि नातिप्रसङ्गः । अत्र च विप्रतिपत्तिवाक्यादेव साध्यस्योपस्थितौ प्रतिज्ञावयवो व्यर्थ इति देश्यमनादेयम् । विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहादिना व्यवधानात् । आवृत्ति-

कल्पना च साध्योपस्थापकपदस्यैव । सैव प्रतिज्ञारूपेति क्व व्यर्थता । किञ्च, विप्रतिपत्त्या साध्यतदभावोपस्थित्या क्व हेत्वन्वयः । योग्यतया वादिवाक्येऽन्वयानियमात् । अपि च, प्रतिज्ञावाक्ये हेतुत्वान्यथानुपपत्त्या ज्ञानलक्षणेति वक्ष्यते । तथा च न विप्रतिपत्त्या तदन्यथासिद्धिः, भिन्नविषयकत्वादिति सङ्क्षेपः ॥

इति प्रतिज्ञाग्रन्थः ।

---

## अथ हेतुग्रन्थः ।

साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां हेतुताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितं, पक्षधर्मतादेस्तदाकाङ्क्षाविरहेण तत्प्रतिपादकपदोपादानेऽप्राप्तकालतापातादिति प्रतिज्ञानन्तरं हेतूपन्यासः । हेतुत्वं च न्यायप्रविष्टत्वे सति साध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वमिति मणिकृतः । नन्वत्र सत्यन्तेन हेतुसमानाकारोदासीनवाक्यं, साध्याविषयकत्वेन तस्मादिति निगमनांशः, हेतुविभक्तिमदित्यनेन यो यो धूमवानित्युदाहरणैकदेशश्च वार्यतां नाम । शब्दोऽनित्यः सामान्यवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वादित्यत्र हेतुचरमांशातिव्याप्तिः केन वारणीया । किञ्च, इदं प्रमेयवद् घटादित्यत्र हेतावव्याप्तिः । प्रमेयरूपसाध्याविषयकज्ञानाप्रसिद्धेः । अपि च, वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्राव्याप्तिः, साध्यविषयकशाब्दधीजनकत्वादिति ।

अत्रोच्यते — चरमशब्दपदाद् य(द)वच्छेदेन हेतुविभक्तिसमभिव्याहारः, तदवच्छिन्नशब्दत्वं लक्षणं सूचितम् । सामान्य(व)त्त्वे सतीत्यत्र सतिसप्तम्याः सामानाधिकरण्यार्थिकाया बलेन विशिष्ट एव हेतुविभक्तिसमभिव्याहार इति न विशिष्टे लक्षणाव्याप्तिः । न च चरमांशेऽतिव्याप्तिः । साध्याविषयकत्वं च साध्यतावच्छेदकावच्छिन्नाविषयकत्वम् । तच्च प्रमेयसाध्यकेऽप्यस्त्येवेति न तत्राव्याप्तिः । साध्याविषयकेत्यत्र न(न्तो ? ञो) व्यत्यासः । तेन साध्यविषयकशाब्दज्ञानजनकता यस्य न्यायप्रविष्टस्य नियता, तद्भिन्नमित्यर्थः पर्यवस्यति । हेतुरूपन्यायप्रविष्टस्य च न सर्वत्र साध्यविषयकज्ञानजनकत्वमिति प्रत्यक्षस्पर्शादित्यादौ नाव्याप्तिः । तस्मादिति निगमनांशस्य च सर्वत्र साध्यविषयकज्ञानजनकतेति तद्भिन्नत्वाभावान्न तत्रातिव्याप्तिरिति दिक् ।

यच्च मणिकृता लक्षणान्तरमुक्तं पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वमिति। तत्र वदन्ति—न्यायाप्रविष्टवाक्यमनुमितिपरपदेन न्यायप्रविष्टत्वार्थेन वार्यतां, निगमनातिव्याप्तिश्च लाक्षणिकपदेनापाक्रियतां, तत्र तस्मादिति सर्वनाम्नः सर्वशक्ततया च लक्षणाविरहात्। प्रतिज्ञायां चातिव्याप्तिवारणाय पञ्चम्यन्तपदं यदुपात्तं, तत् कुतः। न च प्रतिज्ञायां ज्ञानलक्षणासत्त्वादतिव्याप्तिर्माभूदित्ये(तत्?)तदर्थं पञ्चम्यन्तपदमिति वाच्यम्। हेतुपदेन ज्ञापकहेतोरभिधानात् पञ्चम्यापि ज्ञापकत्वस्य प्रतिपादनात्। तथा च धूमप्रयोज्यज्ञानविषयत्वं वह्नौ साध्यत्वमिति किं लक्षणया। एवं वह्निविषयकज्ञानजनकज्ञानविषयत्वरूपं वह्निज्ञापकत्वं धूमे पञ्चम्या प्रतिपाद्य(त) इति हेतावपि न लक्षणेत्यसम्भवो लक्षणस्य। किञ्च, हेतुपदेन ज्ञानलक्षणायां वृत्तिद्वयविरोधापत्त्या ज्ञानमात्रस्योपस्थितिर्वाच्या। तथा च लिङ्गस्यानुपस्थित्या तस्य गमकत्वाकाङ्क्षा न स्यात्। प्रत्युत ज्ञान एव गमकत्वाकाङ्क्षा स्यात्। अपि च, 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकपदं प्रयो(ज्याम?क्ष्यामहे)' इति न्यायाद् धूमज्ञानादिति प्रयोगापत्तिः। तस्मात् प्रयोजकत्वे पञ्चमीत्येव साधु, न तु ज्ञानलक्षणेति।

अत्र मिश्राः—हेतुत्वशक्तायाः पञ्चम्याः प्रयोजकत्वे न शक्तिः, मानाभावादिति लक्षणा वाच्या। तच्च न सम्भवति, सुब्विभक्तौ लक्षणाविरहस्य शब्दखण्डे प्रतिपाद्यत्वात्। न चैवं 'तत्त्वज्ञानान्निःश्रेयसाधिगम' इत्यत्र तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रमिति व्याख्यानात् तस्य च निःश्रेयसाहेतुत्वात् कथं पञ्चमीसङ्गतिरिति वाच्यम्। तत्रानन्यथासिद्धत्वांशविशेषणं परित्यज्य नियतपूर्ववृत्तित्वरूपविशेष्यांशोपस्थितौ लक्षणाविरहात्। विशेष्ये चैकदेशेऽप्याकाङ्क्षासत्त्वेनान्वयात्। अस्तु वा तदनुरोधा(द्) नियतपूर्ववर्तित्वमात्रे पञ्चमीशक्तिः। उक्तरूपप्रयोजकत्वशक्तौ मानाभावात्। यच्च लक्षणापक्षे वृत्तिद्वयविरोधाद् न लिङ्गोपस्थितिरिति दूषणमदायि, तदपि न। ज्ञानलक्षणयैव तदुपस्थितेस्तत्र गमकत्वाकाङ्क्षासम्भवात्। अन्यथा पाकाद् रक्तमित्यनन्वितं स्यात्। पाकस्य रक्तिमगुण एव हे(तु)त्वान्वयात्। तस्य च गुणिलाक्षणिकरक्तपदाद् वृत्तिद्वयविरोधादनुपस्थितेः। तस्माद् गुणिलक्षणयैव तदुपस्थितिर्वाच्या। तथा च प्रकृतेऽपि समानम्। न चैवं लक्षणया प्राधान्येनोपस्थिते ज्ञान एव गमकत्वाकाङ्क्षा स्यादिति वाच्यम्। व्याप्तिविषयकत्वेन खलु ज्ञानं गमकम्। तच्च तदा, यदि धूमो

व्याप्य इति । तद्गमकत्वाकाङ्क्षायामेवोदाहरणप्रवृत्तेः । अस्तु वा विशेषणतयाप्युपस्थिते लिङ्गे गमकत्वाकाङ्क्षा, उपस्थितिमात्रस्यैव तत्र तन्त्रत्वात् । यच्च धूमज्ञानादित्याकारकप्रयोगापत्तिरित्युक्तं, तदपि न । तथा सति तज्ज्ञानलाभापातात् । हेतुविभक्तिसमभिव्याहृतधूमादिपदे ज्ञानलक्षणाया निरूढत्वाङ्गीकारात् । अत एव घटं करोतीत्यादाववयवलक्षणायामपि न घटावयवं करोतीति प्रयोग इति समादधते ।

तत्रेदं विचार्यते — प्रतिज्ञायामेका ज्ञानलक्षणा हेतौ चापरेति लक्षणाद्वयं कल्प्यताम् उत हेतुत्वशक्तपञ्चम्यां प्रयोजकत्वमात्रलक्षणेति । तत्रान्त्ये लाघवात् तदेवास्तु । तद्बलाच्च सुब्विभक्तौ लक्षणा नेत्यस्य तत्राभावः कल्प्यते । न च पञ्चम्या ज्ञापकत्वमुपस्थाप्यम् । तत्र चैकदेशो ज्ञानमिति साध्यस्य पदार्थस्य तेन कथमन्वयोऽस्तु, 'पदार्थः पदार्थेने'ति व्युत्पत्तेरिति वाच्यम् । ससम्बन्धिकस्थले एकदेशान्वयस्यापि स्वीकारात् । अन्यथा चैत्रमातेत्यादौ चैत्रस्य जनकत्वेन पदार्थैकदेशान्वयो न स्यादिति । यच्च ज्ञानलक्षणया विषयस्य लिङ्गस्याप्युपस्थितिरिति समाहितं, तदपि न । अन्यवृत्त्यान्योपस्थितावतिप्रसङ्गात् । न चैवं पाकाद् रक्तमित्यत्रापि गुणिलाक्षणिके गुणस्यानुपस्थितौ कथं तत्र पाकहेतुत्वान्वय इति वाच्यम् । तत्र 'गुणे शुक्ल' इत्यनुशासनाद् गुणिन्यपि रक्तादिपदस्य शक्त्या तयैवोभयोपस्थितौ पाकहेतु(क ?)त्वस्य गुणेऽन्वयसद्भावात् । यच्चोक्तं हे(तु ?)त्ववयवे निरूढलक्षणेति, तदपि न । निरूढत्वानिरुक्तेः । नियततदर्थतात्पर्यमेव तदिति चेद्, न । तात्पर्यस्य पुरुषाधीनतया तदसम्भवात् । न चान्यत्रवृत्तित्वेऽप्यसाधुत्वमित्येव निरूढत्वं, बहुव्रीह्यादिपदवदिति वाच्यम् । एवं सति धूमपदस्यात्र निरूढतया स्वार्थे क्वापि साधुत्वं न स्यात् । न च न्यायप्रविष्टहेत्ववयवत्वावच्छेदेन तथा, न सर्वत्रेति वाच्यम् । एवं सति घोषादिपदसमभिव्याहारावच्छिन्नगङ्गादिपदानामपि निरूढत्वापत्त्या गतं निरूढानिरूढविभागेनेति ।

अत्र प्रतिभाति — विषयाधिक्याल्पत्वकृतं हि गौरवं लाघवं वावतरति, न तु लक्षणैक्यानैक्यकृतम् । तथा च प्रकृते प्रतिज्ञाहेतुपदयोर्ज्ञानलक्षणायां ज्ञानद्वयं विषयः । हेतुत्वज्ञापकपदमात्रे प्रयोजकत्वलक्षणायाश्च ज्ञानजनकज्ञानविषयत्वं विषय इति ज्ञानद्वयं जनकत्वं विषयत्वं च विषय इति महद् गौरवमिति पदद्वयलक्षणैव लघीयसी । न चैवं धूमपदाद् ज्ञानोपस्थितिरेव स्याद्, न तु धूमो-

पस्थितिः, अन्यवृत्त्यान्योपस्थित्यभावादित्युक्तमिति वाच्यम्। किञ्चिन्नियामकसत्त्वेऽन्यवृत्त्याप्यन्योपस्थितेः। कथमन्यथा गङ्गांशस्यावच्छेदकतया भानम्। कथं वा तीरत्वांशभानम्। तत्र लक्षणाविरहस्य शब्दपरिच्छेदे सुव्यक्तत्वात्। तथा च यद्धीति न्यायाद् ज्ञानलक्षणया विषयोपस्थितिरस्तु। किञ्च, मणिकृन्मते वृत्तिद्वयविरोधो न दोषायेति शक्त्या धूमो लक्षणया ज्ञानमुपस्थितमस्तु। दोषाभावात्। भवतु वा वृत्तिद्वयविरोधः क्वचिद् दोषाय, न तु सर्वत्र। अन्यथा लम्बकर्णादिपदात् कर्णस्यानुपस्थितौ तदानयनाद्यभावप्रसङ्गात्। यच्च रक्तादिपदस्य गुणिनि शक्तिरेवेत्युक्तं, तदपि न। किं रक्तपदस्य रक्तत्वविशिष्टरक्तगुण एका गुणिनि चापरा शक्तिः, तत्रापि शुद्धगुणिनि वा रक्तत्वविशिष्टरक्तगुणविशिष्टगुणिनि वा, रक्तत्वविशिष्टरक्तगुणविशिष्टगुणिन्येवैका शक्तिर्न गुणांशे पृथक् शक्तिरिति। नाद्यः। एकयैव शक्त्योपपत्तौ शक्तिद्वये गौरवात्। न च सा गुणिन्येवास्तु। शुद्धस्य गुणिनो रक्तादिपदादनुपस्थितौ रक्तत्वादिविशिष्टरक्तादिविशिष्टे सा वाच्या। तथा च लाघवाद् रक्तत्वादिविशिष्टे एव सास्तु। अत एवान्त्यपक्षोऽप्यपास्तः। न चैवमनुशासनविरोधः। अनुशासनस्य साधुत्वज्ञापकत्वात्। शक्तेश्चानन्यलभ्यत्वादिकल्प्यत्वात्। न चैवं लक्षणया सर्वं सर्वत्र साधु भवत्येवेत्यनुशासनं विफलं स्यादेवेति वाच्यम्। लक्षणयापि तत्रैव साधुत्वमिति ज्ञापयितुमनुशासनाद् व्यत्ययानुशासनवदिति शब्दपरिच्छेदे वक्ष्यमाणत्वात्। किं बहुना, पाकाद् गन्धो घट इत्यादौ का गतिः। गन्धपदस्य गुणिनि शक्तेः केनाप्यनङ्गीकारात्। तस्मात् तत्र गुणिलक्षणयैव गुणस्योपस्थितौ पाकहेतुत्वान्वय इति। यच्च निरूढत्वं निर्वक्तुमशक्यमित्युक्तं, तदपि न। हेतुपञ्चम्यन्तत्वावच्छेदेन ज्ञाने नियतानादितात्पर्यस्यैव निरूढत्वानियामकत्वाद्, अनादितात्पर्यपूर्वकलक्षणाया एव निरूढलक्षणात्वात्, तादृशस्य पदस्य लक्ष्यादन्यत्रासामर्थ्यनियमात्। न चैवं गङ्गापदं समभिव्याहारविशेषावच्छिन्नं निरूढलाक्षणिकं स्यादिति वाच्यम्। तादृशस्य सत्त्वे इष्टत्वात्। शुद्धस्य चातथात्वादित्यलमतिविस्तरेण। एतेन "पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं हेतुलक्षणमनुपपन्नम्। अयमात्मा ज्ञानादित्यत्र ज्ञानज्ञानस्य शक्त्यैवोपस्थितौ लक्षणाविरहेणाव्याप्तेः। किञ्च, अयं सुखी कामिनीसाक्षात्कार(व)त्त्वादित्यत्र सुखरूपसाध्यं प्रति कामिनीसाक्षात्काररूपहेतोः कारणत्वमस्त्येवेत्यनुपपत्त्यभावात्। प्रतिज्ञावाक्ये हेतुवाक्ये वा न लक्षणेत्यव्याप्तिः। तत्त्वादित्यादिहेतावप्यव्याप्तिः।

सर्वनामपदे लक्षणाविरहादि"त्यादिदूषणमपास्तम् । न्यायप्रविष्टहेतुपञ्चम्यन्तत्वावच्छेदेनैव निरूढलक्षणाङ्गीकारात् । शक्तेस्तदपेक्षया दुर्बलत्वात् । अत एव सर्वनामपदेऽपि तत्र लक्षणास्त्येवेति न काप्यतिप्रसङ्ग इति सङ्क्षेपः ।

अत्र च कथायां पक्षधर्मताप्रतिपादनाय मीमांसकवद् मतुपः प्रयोगो न कार्यः । अनाकाङ्क्षितपक्षधर्मताप्रतिपादनाय प्रथमं तदभिधानेऽप्राप्तकालतापातात् । एतदभिप्रायेणैव मणिकृतोक्तं — कथायां धूमादित्येव प्रयोक्तव्यं न धूमवत्त्वाद् (इति), मतुपो व्यर्थत्वादिति । न च तत्र धूमवत्त्वे व्यर्थविशेषणतया व्याप्तिर्ग्रहीतुं न शक्यत इत्येवाभिप्राय इति वाच्यम् । धूमसम्बन्धस्यापि धूमवद् वह्निव्याप्यतया व्यर्थत्वासम्भवात् । समानाधिकरणलघुगुरुद्वयसन्निवेश एव व्यर्थत्वस्य दोषत्वादिति बहुशो निवेदनात् । न चैवमपि धूमवत्त्वादित्युक्ते परं प्रत्यप्राप्तकालत्वरूपो निग्रहो दातुं न शक्यते, यावता धूमवत्त्वमेवाहमत्र हेतुमकरवं न तु मतुपा पक्षधर्मतां प्रतिपादयामीति वादिना वक्तुं शक्यत्वादिति वाच्यम् । उदाहरणोपनयाभ्यां हेतुतानिर्णये निग्रहस्य दातुं शक्यत्वात् । नहि धूमवत्त्वे हेतुत्वेन विवक्षिते यो यो धूमवानित्युदाहरणं धूमवांश्चायमित्युपनयो वा युज्यते । अपि तु धूमवत्वानित्युदाहरणं, धूमवत्त्ववांश्चायमित्युपनय इति दिक् ॥

इति हेतुग्रन्थः ।

---

## अथोदाहरणग्रन्थः ।

हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोरुपदर्शनप्राप्तौ व्याप्तेरनुमितिजनकीभूतपरामर्शविशेषणतया प्रथमोपस्थिततया पक्षधर्मतायाश्च तत्संसर्गतयोपस्थित्यनियमात् प्रागुपस्थितिक्रमप्राप्ताकाङ्क्षावशात् प्रथमं व्याप्तेः प्रदर्शनार्थमुदाहरणम् । तत्र यद्यप्युदाहरणे व्याप्तिरभावादिनानापदार्थगर्भा न पदार्थो न वाक्यार्थ इति तत्प्रदर्शनार्थमुदाहरणं न घटते, तथापि यो य इत्यादिना हेत्वधिकरणे सर्वत्र साध्यसंबन्धप्रतिपादनात् तत्र साध्याभावसंबन्धरूपव्यभिचारशङ्का न भवति । सहचारश्च साक्षादेवोदाहरणवाक्येन प्रतिपाद्यत इति व्यभिचारज्ञानविरहसहकृतसहचारज्ञानसहकृतेन मनसा भवति व्याप्तिग्रह

इत्युदाहरणं व्याप्तिग्रहौ(पाधि ? पयि) कं, न तु साक्षात् तत्प्रतिपादकमिति वृद्धाः। यावत्साधनाश्रयाश्रितसाध्यसंबन्धो व्याप्तिः। सा चोदाहरणवाक्यात् साक्षादेवावगम्यत इति नव्याः। उदाहरणलक्षणं व्याप्यतावच्छेदकावच्छिन्नवद्ध-र्मित्वावच्छिन्नमुद्दिश्य व्यापकतावच्छेदकावच्छिन्नवत्त्वविधायकन्यायावयवत्वम्। उपनये व्याप्यवति व्यापकसंबन्धस्याविधेयत्वात् तत्र पक्षधर्मतामात्रस्यैव विधेय-त्वाद् व्याप्यत्वांशस्यानूद्यत्वान्नातिव्याप्तिः। अत एव यो नीलधूमवान् स वह्निमानित्युदाहरणाभासेऽपि नातिव्याप्तिः। नीलधूमत्वस्य व्याप्यतानवच्छेद-कतया तत्रोक्तलक्षणाभावात्। उदाहरणसमानाकारवाक्यं च न न्यायावयव इति न तत्रातिव्याप्तिरिति तत्त्वम्।

अत्र प्राञ्चः—उदाहरणवाक्ये व्यभिचारशङ्कावारणाय यो य इति वीप्सा कार्या। सा च यत्र व्यभिचारशङ्का तत्रैव। अन्यत्र तु केवलान्वय्यादौ व्यभिचारशङ्का नास्तीति न तत्र वीप्सेत्याहुः। तेषां चायमाशयः—यो य इति वीप्सितशब्दश्रवणानन्तरमनुवादतया प्रयोजनजिज्ञासायां व्याप्तिग्रहप्रयोजन-कत्वेऽवसिते यो य इति प्रथमयत्पदोपस्थाप्यधूमाधिकरणभिन्नं सर्वं धूमाधिक-रणं द्वितीययत्पदेन विशिष्य सामान्यतो वोपस्थाप्यते। तथा च सर्वत्र साध्यसं-बन्धज्ञानाद् व्यभिचारशङ्का न भवतीति भवति मनसा व्याप्तिग्रह इति केवला-न्वयिस्थले वीप्सा न कार्येति। (तत्) तु न सम्यक्। तथा सति तत्र सामाना-धिकरण्यप्रदर्शनमपि व्यर्थमेव स्यात्। केवलान्वयित्वेन ज्ञाते सामानाधिकरण्ये-ऽप्यविप्रतिपत्तेः। तस्मात् तत्रापि वीप्सा कार्यैव वादिना। स्वकर्तव्यस्य निर्वाह-यितुमुचितत्वात्। कथमन्यथा केवलान्वयिसाध्यकसद्धेतुकन्याये उदाहरणाद्यवयव-प्रवृत्तिः। व्याप्तिपक्षधर्मताबाधितत्वादिशङ्काविरहात् तद्बोधकावयवानां त्वदुक्तरीत्या वैयर्थ्यस्य दुरुद्धरत्वात्। असाधकताप्रयोगे सर्वसंप्रदायसिद्धतया न व्याप्त्यादि-प्रदर्शकावयवोपन्यास इति न तत् प्रतिबन्धकमिति दिक्।

मणिकृतस्तु—वीप्सायामपि व्यभिचारशङ्कातादवस्थ्याद् न सा कार्या। यदि वा कार्या, तदा यत्पद एव, न तु तत्पदेऽपि। नानायत्पदोपस्थाप्यस्यैक-तत्पदेनैव परामर्शसंभवात्। तथा च 'यद् यत् पापं प्रतिजहि जगन्नाथ! नम्रस्य तन्मे' इत्यादाविति वदन्ति। तेषामयमभिप्रायः—वीप्सायामपि सर्वाधिकरणोप-स्थि(ते?ति)रनुवादेन व्याप्तितात्पर्यकत्वग्रहद्वारा, न साक्षात्। तथा च यद्योगमाथ-

म्याम्यामेव व्याप्तितात्पर्यकत्वग्रहोऽस्तु। तथा चैकयत्पदेनैव सर्वमपि हेत्वधिकरणमुपस्थाप्यताम्। कृतं वीप्साघटितगुरुशरीरेणोदाहरणेनेति। यदि च कथकसंप्रदायसिद्धत्वादुपायस्योपायान्तरादूषकत्वाच्च यत्पदवीप्सादरः। त(था।दा) च तत्पदवीप्सायामतिगौरवम्। एकेनैव तत्पदेनोभयोपस्थितिसंभवादिति।

इदं त्ववधेयं—यत्पदतत्पदयोरुभयोरपि समयबन्धेन वीप्सा कार्या। अन्यतरसमयबन्धेनान्यतरवीप्सा वा। समयबन्धेन विना वीप्सा कापि न कार्यैवेति।

अत्र च यो यो धूमवानित्युदाहरणवाक्यं न घटते। धूमः कथं गमक इत्याकाङ्क्षायामुदाहरणप्रवृत्तेस्तेन धूमसामानाधिकरण्यप्रतिपादनस्योचितत्वात्। धूमवानित्यनेन मतुबर्थसामानाधिकरण्यप्रतिपत्तेः। मतुबर्थसंबन्धस्य पदार्थतया तत्संबन्धस्यैव वाक्यार्थत्वादिति यत्र यत्र धूम इत्येवोदाहरणमर्हतीति मिश्राः। तच्च न मनोज्ञम्। एवं सति पर्वतो वह्निमान् इति प्रतिज्ञा वह्निव्याप्यधूमवांश्चायमित्युपनयो वह्निमानिति निगमनं च विरुध्येत, ततो वह्न्यादिसंबन्धविधेयताया एव प्रतीतेः। तस्मादत्र कथकसंप्रदायानुरोध एव शरणमिति दिक्॥

इत्युदाहरणग्रन्थः।

---

## अथोपनयग्रन्थः।

उदाहरणानन्तरं व्याप्तेः सहकारिणी पक्षधर्मता वर्तते न वेत्याकाङ्क्षायां तत्सहकारिणीं पक्षधर्मतां प्रतिपादयितुमुपनयः। तत्रानुमितिकारणीभूतपरामर्शजनकावयव उपनय इति मणिकृतः।

नन्विदमयुक्तम्। अनुमितिहेतुमानसपरामर्शस्योपनयवाक्याजन्यत्वादिति चेद्। अत्र वदन्ति—अनुमितिहेतुपरामर्शसमानाकारपरामर्शजनकावयवत्वमुक्तलक्षणार्थः। अस्ति चोपनयजन्यपरामर्शस्य व्याप्तिवैशिष्ट्यावगाहिनः तादृशमानसपरामर्शस्य समानाकारतेति नासंभव इति।

अत्रेदं शङ्क्यते—तस्माद् वह्निमानिति निगमने लक्षणमिदमतिव्याप्तम्। तस्मादित्यनेन व्याप्तिविशिष्टपक्षधर्मतापरामर्शेनोक्तसमानाकारज्ञानजननात्।

किञ्च, समानाकारता यावत्तद्विषयविषयकतया यत्किञ्चित्तद्विषयविषयकतया वा । नान्त्यः । अतिप्रसङ्गात् । नाद्यः । मानसपरामर्शविषयाबाधितत्वादेरुपनयजन्यपरामर्शाविषयतयासंभवापातादिति ।

अत्र प्रतिभाति — अबाधितत्वासत्प्रतिपक्षितत्वातिरिक्तांशो यावान् मानसपरामर्शस्य यथा विषयः, तावान् तज्जन्यपरामर्शस्य तथैव विषयः, तादृशावयव उपनयः। निगमनजन्यज्ञाने च साध्यांशस्य परामर्शे व्याप्तिविशेषणतया विषयस्य स्वातन्त्र्येणापि भानाद् न तत्रातिव्याप्तिः । न च तत्त्वादित्यंशे तथाप्यतिव्याप्तिरिति वाच्यम् । अवयवपदेनैव तद्व्युदासात् । तस्यावयवावयवत्वात् ।

अत्र च हेत्ववयवेनैव पक्षधर्मता प्रतिपाद्यतां, किं तत्प्रतिपादकोपनयेनेति देश्यमनादेयम् । हेत्ववयवस्य कारणमात्राकाङ्क्षाप्रवृत्ततया पक्षधर्मताबोधकत्वाभावात् । आकाङ्क्षाक्रमेणैव तदर्थस्य प्रतिपादयितुमुचितत्वादिति दिक् ॥

इत्युपनयग्रन्थः ।

---

## अथ निगमनग्रन्थः ।

उपनयानन्तरं निगमनम् । तच्च न्यायावयवत्वे सति व्याप्तिविशिष्टपक्षधर्मताज्ञानप्रयुक्तसाध्य(ज्ञानज्ञान ?)धीजनकम् । प्रतिज्ञावदत्रापि ज्ञानलक्षणासत्त्वादसिद्धिर्न भवति । प्रतिज्ञायां च न व्याप्त्यादिधीप्रयुक्तं तज्जनकत्वमिति न तत्रातिव्याप्तिः ।

ननु व्याप्तिविशिष्टपक्षधर्मत्वस्यावयवान्तरेणैव प्रतिपादनाद् निगमनं किमर्थमिति चेद्, न । अबाधितत्वादि(ति ?)धीजनकत्वेनास्योपयोगात् । अबाधितत्वादिज्ञानस्याप्यनुमितितन्त्रत्वात् । यद् यदवगमे सति न भवति, तत् तदभावावगमसाध्यमिति मणिकृतः । तेषां चायमाशयः — अबाधितत्वादौ निगमनेन प्रतिपादिते सति न बाधादिज्ञानमनुमितिप्रतिबन्धकीभूतं जायत इति व्याप्तिविशिष्टपक्षधर्मताज्ञानं बाधादिज्ञानाभावसहकृतमनुमितिं जनयतीति तदनुकूलत्वान्निगमनं (न) व्यर्थमिति । एतेनाबाधितत्वज्ञानस्यानुमितिहेतुत्वे तद्विषयकत्वमपि परामर्शे स्वीकार्यम् । तथा च परामर्शविषयाभावत्वेनासिद्धिमध्यपातो बाधादेः

स्यादित्यपसिद्धान्तः। किञ्चाबाधितत्वज्ञानं साध्यज्ञानमेव। तथा च साध्यज्ञानं साध्यज्ञानहेतुरिति फलितमिति सिद्धसाधनादनुमित्यनवतार एव स्यादित्यादिदूषणमपास्तम्। अबाधितत्वज्ञानहेतुत्वस्य मणिकारानभिप्रेतत्वेनोक्तदोषविरहात्। यथा चैवं सति न निगमनानर्थक्यं, तथा च व्युत्पादितमेव।

केचित्तु — अनुमितावबाधितत्वप्रमाया गुणत्वेन हेतुत्वमिति संशयनिश्चयसाधारणमबाधितत्वज्ञानमनुमितित्वावच्छेदेन हेतुरेव। अत एव न सिद्धसाधनमपि। यथा चैवंसति नासिद्धावन्तर्भावस्तथाग्रे वक्ष्यत इति यथाश्रुत एव मणिः साधीयानित्याहुः।

ननु निगमनेन कथमबाधितत्वासत्प्रतिपक्षितत्वभानम्। साध्यप्रतिपादकतामात्रेण तथात्वे प्रतिज्ञाया अपि तथात्वापातादिति चेद्, न। प्रतिज्ञावाक्येन साध्यस्य प्रतिपादनेऽपि साध्याभावांशव्युदासकस्यानुपदर्शनाद् न ततः साध्याभावव्युदासावगमः। इह तु तस्मादित्यनेन व्याप्यधूममुद्भावयता वह्निव्याप्यदर्शनस्यैव जननाद् नात्र वह्न्यभावोऽस्तीति ज्ञायते। तच्च ज्ञानं मानसमानुमानिकं वेति न कश्चिद् विशेषः। यद्वा, साध्ये पुनर्वचनस्यानुवादतया प्रयोजनजिज्ञासायां बाधाद्यभाव एव प्रयोजनं पारिशेष्यादवसीयते। तथैव व्युत्पत्तेः। बाधादिविरहज्ञानं च पूर्वोक्तप्रकारेणैव। साक्षान्निगमनासंभवात्। अपदार्थत्वादवाक्यार्थत्वाच्च। यद्यपि व्युत्पत्तिस्तात्पर्यज्ञानं, तच्च शब्दोपात्तं विना वादिवाक्ये न निर्वहति। तथाप्यनादितात्पर्यं व्युत्पत्तिः। सा चानादिलक्षणावद् वादिवाक्येऽपि संभवत्येवेति न कोऽपि दोष इति।

इदं तु ध्येयं — न्यायवाक्ये नायं हेत्वाभासः तल्लक्षणायोगादिति कण्टकोद्धारकवाक्यं, यथा महानस इत्यादिदृष्टान्तप्रयोगश्च सामयिक इति सङ्क्षेपः॥

इति निगमनग्रन्थः।

---

## अथ हेत्वाभाससामान्यनिरुक्तिः।

अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते। तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति मणिकृतः। नन्वि-

दसयुक्तं, व्यभिचारादिज्ञानाभावस्यानुमित्यहेतुत्वात् करणविघटकहेत्वाभासमात्राव्याप्तेः। न चानुमितिप्रतिबन्धनियतयथार्थज्ञानविषयत्वमेव लक्षणार्थः, स च व्यभिचारादावप्यस्तीति नाव्याप्तिरिति वाच्यम्। यथार्थपदेन व्यभिचारित्वभ्रमविषयसद्धेतत्वतिव्याप्तिनिरासेऽपि घटधूमौ वह्निव्यभिचारिणावित्येकांशयथार्थविषयतामादाय सद्धेतुधूमातिव्याप्तेस्तथापि दुर्वारत्वात्। न च यल्लिङ्गविषयतया यज्जन्यानुमितिप्रतिबन्धकत्वं तल्लिङ्गांशे यथार्थत्वं ज्ञानस्य विवक्षितमिति वाच्यम्। बाधितलिङ्गासङ्ग्रहापत्तेः। तत्र पक्षनिष्ठसाध्याभावविषयकतया तज्ज्ञानस्य प्रतिबन्धकतया लिङ्गविषयतया प्रतिबन्धकत्वाभावात्। किञ्च, सत्प्रतिपक्षेऽव्याप्तिः। प्रतिबन्धकीभूतविरोधिव्याप्त्यादिज्ञानस्यायथार्थत्वादिति।

अत्र केचिद् — बाधायामपक्षधर्मो हेतुरनैकान्तिको वेति न्यायाद् व्यभिचारित्वाद्युपाधिनैव तस्य सङ्ग्रह इति नाव्याप्तिः। सत्प्रतिपक्षेऽप्यसिद्धयादिसङ्कीर्णेऽसिद्धत्वादिनैव सङ्ग्रहः। सद्धेतुसत्प्रतिपक्षे तु स्वीयव्याप्त्यादिधीरेव दशाविशेषे विरोधिनीति तद्यथार्थत्वादेव लक्षणं नेयम्। एवमसाधारणेऽपीति। तच्चिन्त्यम्। यदि बाधितत्वेन सामान्यलक्षणेन न सङ्ग्रहः, तदा विशेषलक्षणेनापि तेन रूपेण सङ्ग्रहो न स्यात्। सामान्यलक्षणोपगृहीतस्यैव विशेष(लक्ष)णेन परिग्रहात्। किञ्च, अग्रे वक्ष्यमाणासङ्कीर्णबाधोदाहरणस्थलेऽव्याप्तिः सुदृढैव। तत्र व्यभिचारित्वाद्यभावेन तथा सङ्ग्रहाभावात्। यच्च सद्धेतुसत्प्रतिपक्षादौ स्वीयव्याप्तिधीरेव विरोधिनीत्यवादि। तन्न। स्वीयव्याप्त्यादिज्ञानस्य स्वसाध्यानुमित्यनुकूलतया तदप्रतिबन्धकत्वात्। न च विरोधिव्याप्त्यादिधीसमवधानावच्छिन्नस्वीयव्याप्त्यादिज्ञानत्वेनास्तु प्रतिबन्धकतेति वाच्यम्। तथा सत्यावश्यकतया विरोधिव्याप्त्यादिविषय एव प्रतिबन्धकतौचित्यात्। अन्यथा मणिसमवधानावच्छिन्नवह्नेरपि दाहप्रतिबन्धकत्वापातादित्यलमनाङ्क्षेण।

मिश्रास्तु — ज्ञानेऽनुमितिप्रतिबन्धकतावच्छेदको धर्म इह यद्विशिष्टे ज्ञानेऽनुमितिप्रतिबन्धावश्यंभावः स विवक्षितः। स च प्रतिबन्धकज्ञानविषयस्तदविषयश्च। तत्राद्यो व्यभिचारादिः। अन्त्यः सत्प्रतिपक्षादौ विरोधिसामग्रीकालीनत्वादिः। पारिभाषिकप्रतिबन्धकतावच्छेदकत्वस्य गुरुण्यपि तत्राविरोधात्। तथा चानुमितिप्रतिबन्धकतावच्छेदकधर्मवत्त्वगोचरयथार्थज्ञानविषयत्वस्य लक्षणार्थस्य सत्प्रतिपक्षादावपि सत्त्वान्न तत्राव्याप्तिः। अत एव नोपाधावतिव्याप्तिः। उपाधि-

ज्ञानेऽपि व्यभिचाराज्ञानदशायामनुमितिप्रतिबन्धाभावेन तन्नियमघटितप्रतिबन्धक-तावच्छेदकशून्यत्वात्। अत एव न सिद्धिविषयसाध्यस्यापि हेत्वाभासता, प्रतिब-न्धानियमात्। सिद्धावपि सिसाधयिषायामनुमितेः। अत एव च नाज्ञानरूपासि-द्ध्याद्यतिप्रसङ्गोऽपि। अनुमितिप्रतिबन्धनियमसत्त्वेऽपि ज्ञाननिष्ठप्रतिबन्धकताव-च्छेदकस्यात्र लक्षणे प्रवेशात् तस्याश्च स्वरूपसत्या एव तथात्वात्। यद्वा, प्रति-बन्धकज्ञानविषय एव ज्ञाने प्रतिबन्धकतावच्छेदकोऽस्तु। तथापि सत्प्रतिपक्षे नाव्याप्तिः। विरोधिव्याप्त्यादेरेव प्रतिबन्धकतावच्छेदकस्य प्रतिबध्यलिङ्गे ज्ञानल-क्षणसंबन्धेन वृत्तेः। तच्च ज्ञानं परामर्श एव। तेन संबन्धेन च तद्वत्त्वधीर्यथा-र्थैव। अथवा लिङ्गं स्वज्ञानद्वारानुमितिप्रयोजकम्। तच्च हेत्वाभासेन वार्यते। तथा च लिङ्गस्यानुमित्यप्रयोजकतावच्छेदकधर्मवत्त्वं तद्वत्त्वगोचरयथार्थधीविषयत्वं वा लक्षणार्थः। तथा च सत्प्रतिपक्षादावपि लिङ्गनिष्ठानुमित्यप्रयोजकतावच्छेदको धर्मो लिङ्गनिष्ठ एव वाच्यः। अन्यनिष्ठाप्रयोजकत्वस्यान्यनिष्ठधर्मानवच्छेद्यत्वात्। समानाधिकरणस्यैवावच्छेदकत्वात्। तथा चानुमित्यप्रयोजकतावच्छेदकः सत्प्रति-पक्षे गुरुरपि विरोधिसामग्रीकालीनत्वादिरेव। एवं बाधितेऽपि साध्याभाववत्पक्ष-वृत्तित्वमिति नाव्याप्तिरित्याचक्षते।

अत्रेदं शङ्क्यते—भ्रमत्वविषयीभूतमपि पारिभाषिकप्रतिबन्धकतावच्छे-दकं, तथाप्यव्याप्तिः। यत्रातीतेना(ना)गतेन वा लिङ्गेन सत्प्रतिपक्षः, तत्र विरोधिज्ञानसामग्रीकालीनत्वस्य तादृशलिङ्गेऽसत्त्वात्। किञ्च, व्यभिचारित्वस्या-प्युक्तप्रतिबन्धकतावच्छेदकत्वाभावादव्याप्तिः। व्यभिचारज्ञाने परामर्शोत्तरजाते सत्यप्यनुमितिप्रतिबन्धाभावात्। करणस्य परिपूर्णतया तद्विघटनाभावात्। न च परामर्शानन्तरं व्यभिचारधीरसंभविनी, ग्राह्याभावज्ञानात्। किञ्च, तदानुमितिसा-मग्रीसत्त्वादनुमितिरेव, न तु व्यभिचारधीरिति वाच्यम्। शाब्दसिद्ध्यनन्तरं यत्र शाब्द एव परामर्शस्तदनन्तरं प्रात्यक्षिकव्यभिचारधीः, तत्र तद्दोषसंभवात्। तत्र परामर्शस्य शाब्दतया प्रात्यक्षिकव्यभिचारज्ञानाप्रतिबन्धकत्वात्। ग्राह्यप्रत्यक्षे ग्राह्याभावप्रत्यक्षस्यैव प्रतिबन्धकत्वात्। न च व्यभिचारधीकालेऽनुमितिसाम-ग्र्यपि। परामर्शपूर्वोत्पन्नया परामर्शसमानकालीनया सिद्ध्या प्रतिबन्धादिति प्रथ-मपक्षो न घटते। द्वितीयपक्षोऽपि न क्षोदक्षमः। विरोधिव्याप्त्यादेः प्रतिब-ध्यलिङ्गेन सह ज्ञानसंबन्धकल्पने मानाभावः। भावे वा धूमो वह्निव्यभिचारीति

भ्रमस्यापि व्यभिचारेण सह धूमस्य संबन्धत्वं प्रसज्ज्येत। तथा च सद्धेतौ लक्षणातिव्याप्तिः। न च ज्ञानं न सर्वत्र सम्बन्धः, किन्तु फलबलात् क्वचिदेव। तथा चेदमनेन सत्प्रतिपक्षितमिति ज्ञानस्य यथार्थत्वव्यवहारात् तज्ज्ञानं संब(न्धे? न्धत्वे)न कल्प्यते। धूमो वह्निव्यभिचारीति ज्ञानस्यायथार्थत्वव्यवहारान्न तज्ज्ञानं तत्संबन्धरूपमिति नञ्यदूषणं न सव्यामिति वाच्यम्। उक्तपरामर्शरूपज्ञानस्य विरोधिलिङ्गनिष्ठव्याप्त्यादिसम्बन्धत्वे एकहेतौ बाधावतारेऽपि सत्प्रतिपक्षस्य दुर्वारत्वापातात्। तज्ज्ञानस्य तदाप्यविशिष्टत्वात्। किञ्च, अनुमितिप्रतिबन्धकतावच्छेदको धर्मो व्यभिचारित्वादिः, तद्वत्त्वमाश्रयाश्रयिभावेन, ज्ञानरूपप्रतिबन्धकतावच्छेदकवत्त्वं च विषयविषयिभावेनेत्यननुगमः। यथाकथञ्चित् तद्वत्त्वमात्रस्य चातिप्रसङ्गपराहतत्वादिति। तृतीयपक्षोऽप्ययुक्तः, धूमस्यापि व्यभिचारभ्रमदशायां वह्न्यनुमित्यप्रयोजकतया तन्निष्ठस्य व्यभिचारभ्रमकालीनत्वस्याप्यनुमित्यप्रयोजकतावच्छेदकतया तद्वत्त्वज्ञानमादाय सद्धेतावतिव्याप्तेर्वज्रलेपायितत्वादिति।

अत्रायमाशयो मिश्राणां — विरोधिज्ञानसामग्रीकालीनत्वं तत्कालीनव्याप्त्यादिमत्तया ज्ञायमानत्वम्। तच्चातीतानागतलिङ्गस्थलेऽप्यस्त्येवेति न तत्र सत्प्रतिपक्षेऽव्याप्तिः। यद्वा, तत्कालसम्बन्धो विरोधिसामग्रीविशिष्टं (न?)तत्र प्रतिबन्धकतावच्छेदकम्। तच्च तत्राप्यस्त्येव, अनेनेदं सत्प्रतिपक्षितमिति प्रतीतेः। यच्च व्यभिचारज्ञाने सत्यपि प्रतिबन्धानियमात् तत्राव्याप्तिरित्यवादि, तदपि न। परामर्शानुत्पत्तिकालीनयद्विशिष्टज्ञानेऽवश्यं प्रतिबन्धनियमः, तद्वत्त्वस्यात्र प्रतिबन्धकतावच्छेदकत्वेन विवक्षितत्वात्। अस्ति चैतद् व्यभिचारेऽपि। परामर्शपूर्वं ज्ञातेऽनुमित्यनुत्पादानियमात्। न च बाधस्य परामर्शोत्तरं प्रतिबन्धकत्वात् तत्राव्याप्तिः। तदुत्तरं प्रतिबन्धकत्वेऽपि तत्पूर्वमपि प्रतिबन्धकत्वाविरोधात्। उपाधौ तु परामर्शपूर्वं ज्ञाते अनुमितिप्रतिबन्धो नावश्यकः। व्यभिचारज्ञानानावश्यकत्वात्।

नन्विदमप्ययुक्तं — परामर्शपूर्वमन्योन्याभावगर्भव्यभिचारज्ञाने सत्यप्यत्यन्ताभावगर्भव्याप्तिज्ञानादनुमित्युत्पत्तेरिति चेद्, न। अन्योन्याभावगर्भव्यभिचारज्ञाने सत्यत्यन्ताभावगर्भव्याप्तिज्ञानस्यासम्भवात्। *तच्च साक्षात् तद्गर्भव्य-

---

* तच्च असंभवनं च।

भिचारोन्नायक(ता?तया) वेति न कश्चिद् विशेषः । यत्तु — विषयीभूतप्रतिबन्धकतावच्छेदकस्य लिङ्गेन सह ज्ञानं विरोधिव्याप्त्यादेर्यदि सम्बन्धः, तदा बाधावतारेऽपि सत्प्रतिपक्षतापत्तिः, ज्ञानस्य तदापि सत्त्वादिति दूषणमुक्तम् । तदपि न । ज्ञानस्य हि व्यवहारबलादगत्या तत्सम्बन्धरूपत्वाभ्युपगमेन बाधावतारदशायां तत्सम्बन्धरूपताविरहात् । घटसत्त्वदशायां भूतलस्य घटाभावसम्बन्धत्वानभ्युपगमवदत्रापि कदाचित् सम्बन्धरूपत्वे दोषाभावादिति । यदपि — तद्वत्ता कदाचिदाश्रयाश्रयिभावेन क्वचिच्च विषयविषयिभावेनेत्यननुगम इति दूषणमभ्यधायि । तदपि न । यादृशसम्बन्धेन तद्वत्तामादाय व्यभिचारितामिदं सत्प्रतिपक्षितमिदमिति धीः, तादृशसम्बन्धस्य लक्षणप्रवेशात् । स च क्वचिदाश्रयाश्रयिभावः, क्वचिद् विषयविषयिभाव इति । वस्तुतस्तु — सर्वत्रानुमितिप्रतिबन्धकतावच्छेदकधर्मनिरूपितस्वरूपसम्बन्धविशेष एव तद्वत्तानियामकः । स च तादृशसम्बन्धत्वेनानुगत इति ना(न)नुगमः । अत एव यत्र निरन्तरपरामर्शद्वयरूपसत्प्रतिपक्षः, तत्र विषयविषयिभावेऽपि विरोधिलिङ्गेन सह तज्ज्ञानमासत्तिरिति दिक् ।

इदं तु शङ्कयते — लक्षणमिदं व्यभिचारादौ धर्मेऽतिव्याप्तं, धर्मिण एवात्र लक्ष्यत्वात् । न च हेत्वभिमतत्वे सतीत्यपि तद्धारकाविशेषणं देयमिति वाच्यम् । कदाचित् कस्यचिद् व्यभिचारादिधर्मस्यापि हेत्वभिमतत्वात् । सर्वदा सर्वधर्मिणोऽपि हेतुत्वेनानभिमतत्वात् । किञ्च, ज्ञानविषयत्वं विशेषणमुपलक्षणं वा । नाद्यः । तादृशज्ञानाभावकाले नित्यदोषस्य साधारणादेरहेत्वाभासत्वप्रसङ्गात् । नान्त्यः । असाधारणसत्प्रतिपक्षादेरनित्यदोषस्यापि विशेषदर्शनदशायामपि हेत्वाभासत्वापातात् । किञ्च, यत्पुरुषीयतादृशज्ञानविषयत्वं यस्य तस्य तं प्रत्येव हेत्वाभासत्वम्, अन्यं प्रत्यपि वा । नाद्यः । विरुद्धादेर्नित्यदोषस्य तथाग्राहिपुरुषं प्रत्यनाभासताप्रसङ्गात् । नान्त्यः । असाधारणादेर्विशेषादर्शनात् तथा ज्ञायमानस्य विशेषदर्शिनं प्रत्यपि दोषताप्रसङ्गात् ।

अत्राहुः — अनुमितिप्रतिबन्धकतावच्छेदकधर्मवत्त्वगोचरयथार्थधीविशेष्यत्वं विवक्षितम् । व्यभिचारादयस्तु धर्मास्तादृशधीविशेषणभूता इति नातिव्याप्तिः । तादृशधीविशेष्यत्वं च विशेषणमेव । तच्च ईश्वरज्ञानविशेष्यत्वमादाय विरुद्धादिनित्यदोषे सर्वदास्तीति नाव्याप्तिः । सत्प्रतिपक्षादौ त्वनित्यदोषत्वनिर्णयादीश्वरधीविरहकल्पनात् । फलैकोन्नेयत्वात् तस्याः । पुरुषान्तरीयतादृशधियमा-

दाय पुरुषान्तरे च नाभासता। विशेषतः पुरुषादेरत्राप्रवेशात्। तादृशज्ञानविषयस्य हेत्वाभासत्वमित्येवाङ्गीकारात्। तत्पुरुषादिहेत्वाभासत्वस्य विशि(ष्य ? ष्या)निरूपणादिति।

नन्वेवमपि बाधसामग्र्यां लक्षणमतिव्यापकमेव। तस्या अपि विरोधिज्ञानसामग्रीत्वेनानुमितिप्रतिबन्धकत्वात्। एवं प्रत्यक्षसामग्र्यामतिव्याप्तिः। संशयोत्तरप्रत्यक्षे तस्या अनुमितिप्रतिबन्धकत्वकल्पनादिति चेद्, न। अनुमितिप्रतिबन्धकत्वं हि न सर्वानुमितिप्रतिबन्धकत्वम्। असिद्धेः। हेत्वाभासेनाप्यसाधकतानुमित्युत्पादनात्। नापि प्रकृतानुमितिप्रतिबन्धकत्वं, सिद्ध्यसिद्धिव्याघातात्। किन्तु तत्पक्षकतत्साध्यकतल्लिङ्गकानुमितित्वावच्छिन्नप्रतिबन्धकत्वम्। तच्च न प्रत्यक्षसामग्र्याः, तस्या भिन्नविषयकतादृशानुमित्यप्रतिबन्धकत्वात्। समानविषयकप्रत्यक्षसामग्र्या एव बलवत्त्वात्। बाधसामग्र्याश्च विरोधिज्ञानसामग्रीत्वेन प्रतिबन्धकता। तथा च सत्प्रतिपक्ष एवान्तर्भावः। न तु विरोधिबुद्ध्युपहितसामग्रीत्वं सत्प्रतिपक्षविलक्षणं तत्र प्रतिबन्धकतावच्छेदकम्। मानाभावाद्, अन्यत्र सिद्धधर्मावच्छेदेनैव त(त्र क ? त्क)ल्पनौचित्यात्। विरोधिबुद्ध्युपधानमिह स्वकारणान्न सत्प्रतिपक्षस्थल इत्यन्यदेतदिति तत्त्वम्।

वयन्तु विवेचयामः — अनुमितिप्रतिबन्धकतावच्छेदकधर्मपदमिह व्यभिचारादिपञ्चकपरमेव। सामान्यपदस्य विशेषपरत्वात्। तथा चैतत्पञ्चकरूपानुमितिप्रतिबन्धकतावच्छेदकधर्मवदिदं पञ्चकं हेतुत्वाभिमतमिति *समूहालम्बनरूपविशेष्यत्वमुक्तलक्षणार्थ इति नोपाध्यादौ कुत्राप्यतिप्रस(ङ्गात ? ङ्ग)संभावनापीति। इदं त्ववश्यं वाच्यमेव। अन्यथोपाध्यादावतिप्रसङ्गो ब्रह्मणापि दुर्वार एव। तथाहि — ज्ञा(न ? ना)विषयीभूतप्रतिबन्धकतावच्छेदकपक्षे सत्प्रतिपक्षे विरोधिज्ञानसामग्रीकालीनत्वस्य स्वरूपसतः प्रतिबन्धकतावच्छेदकत्ववद् उपाधावपि स्वरूपसद्व्यभिचारानुमित्युपाधानकालीनत्वस्य तादृशत्वेनातिव्याप्तेः। तादृशे सत्युपाधिज्ञानेऽनुमितिप्रतिबन्धकतानियमात्। किं बहुना, व्याप्तिज्ञानकालावच्छिन्नलिङ्गज्ञानेऽसत्यनुमित्यनुत्पादनियमादज्ञानरूपासिद्ध्यतिव्याप्तिः। एवं सिसाधयिषाविरहकालीनत्वविशिष्टे साध्यज्ञाने सत्यनुमितिप्रतिबन्धनियमात् सिद्धिविषयसाध्यस्यापि हेत्वाभास-

---

* समूहालम्बनरूपेति समूहालम्बनरूपज्ञानेत्यर्थः।

तापत्तिरित्येवं बहुविप्लवः प्रसज्ज्येत । एवं प्रतिबन्धकज्ञानविषयस्यैव प्रतिबन्धकतावच्छेदकत्वमिति पक्षेऽपि किमेकदेशज्ञानस्य प्रतिबन्धकत्वे तद्विशिष्टस्यापरस्याज्ञायमानस्यापि प्रतिबन्धकतावच्छेदककोटिप्रवेशः, उत यावत एव ज्ञानं प्रतिबन्धकं तावत एव तत्र प्रवेश इति । नान्त्यः । साधारणत्वादेरपि प्रतिबन्धकतावच्छेदकत्वं न स्यात् । साध्याभावांशनिश्च(यविष)यीभूतसाध्याभाववद्वामित्वस्य साधारणत्वस्य साध्यांश(स्य ?)निश्च(यविष)यीभूतसाध्यवद्व्यावृत्तत्वस्यासाधारणत्वस्य च साध्याभावनिश्चयसाध्यनिश्चयघटिततया तस्य चाज्ञायमानस्यैव तत्र प्रवेशाङ्गीकारात् । नाद्यः । स्वरूपसद्व्यभिचारानुमित्युद्देश्यधानावच्छिन्न(स्य) साध्यव्यापकत्वादेर्ज्ञायमानस्योपाधौ, स्वरूपसात्सिसाधयिषाविरहावच्छिन्नस्य साध्यस्य ज्ञायमानस्य सिद्धसाधनं, स्वरूपसदगृहीतव्याप्त्याश्रयत्वविशिष्टस्य (ज्ञायमानस्य) हेतोरज्ञानादावनुमितिप्रतिबन्धकतावच्छेदकत्वापातादित्यतिप्रसङ्गस्य दुर्वारत्वात् । तस्मादुक्तार्थ एव ग्राह्य इति सङ्क्षेपः ॥

इति हेत्वाभाससामान्यनिरुक्तिः ।

---

## अथ सव्यभिचारसामान्यनिरुक्तिः ।

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च । तत्र सव्यभिचारस्त्रेधा साधारणासाधारणानुपसंहारिभेदात् । तत्र व्यभिचारस्योभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं लक्षणमिति मणिकृतः । अस्यायमर्थः — साध्यव्याप्तिनिश्चयविरोधिसंशयजनकोभयकोट्युपस्थितिजनकज्ञानविषयतावच्छेदकधर्मवत्त्वम् । तेन केवलान्वयिसाध्यकानुपसंहारिणि नाव्याप्तिः । तत्र साध्यतदभावसंशयासम्भवेऽपि साध्ये पक्षवृत्तित्वतदभावसंशयस्य व्याप्तिनिश्चयविरोधित्वात् । केवलान्वयिसाध्यकानुपसंहार्यत्र लक्ष्य एव नेत्यपि कश्चित् । तादृशधर्मः सपक्षविपक्षवृत्तित्वं, सपक्षविप(क्ष ? क्षावृत्ति)त्वं, साध्यसंशयविषयमात्रवृत्तित्वमिति त्रितयम(पि ? भि)संहितम् । नन्वात्मत्वादिसाध्ये सद्धेतुभूतज्ञाने लक्षणमिदमतिव्याप्तं, साध्यसंशयजनककोटिद्वयोपस्थितिरूपप्रामाण्याप्रामाण्यकोट्युपस्थितिजनकज्ञानविषयतावच्छेदकज्ञानत्वरूपधर्मवत्त्वाज्ज्ञानस्यापीति चेद्, न । साध्यसंशयविषयवृत्तितया य-

ज्ज्ञानस्य तादृशकोट्युपस्थापकत्वमित्यर्थात्। ज्ञानत्वज्ञानं तु प्रामाण्यसंशयविषयवृत्तितया तादृशसंशयजनककोट्युपस्थापकं, न साध्यसंशयविषयवृत्तितया। विवक्षितं च प्रकृते तदिति न ज्ञानत्वरूपधर्मवति ज्ञानेऽतिप्रसङ्ग इति वदन्ति।

अत्र कश्चिद् — व्यभिचारत्वस्यापि साधारणधर्मदर्शनादित्वेनैव तादृशतदुपस्थापकता, न तु संशयविषयवृत्तित्वं तदुपस्थापकतायां तन्त्रमित्यसिद्धं लक्षणमिति दूषणमाह। तन्न। साध्यसंशयविशेष्यवृत्तितानियता यस्य तादृशकोट्युपस्थापकतेत्यर्थात्। भवति च साधारणे वह्न्यादौ गृहीते इदं धूमवन्न वेति संशय इति तस्य साध्यसंशयधर्मिवृत्तितानियतैव तदुपस्थापकता। ज्ञानत्वं (नः) तु साध्यसंशयविशेष्यावृत्त्यपि प्रामाण्यसंशयविशेष्यवृत्तितामात्रेण तदुभयकोट्युपस्थापकमिति ज्ञानपक्षकानुमित्यादौ ज्ञानत्वस्य संशयविषयवृत्तित्वेऽपि तन्नियमाभावान्नातिप्रसङ्ग इति तत्त्वम्। यत्तु — यत्तूभयकोट्युपस्थापकतावच्छेदकत्वं प्रामाण्य एवातिप्रसक्तमित्याशङ्कयोक्तक्रमेण परिहरन्ति केचित्। तद्भ्रान्त्या। प्रामाण्याद्युपस्थितेरेवोभयकोट्युपस्थितिरूपतया तज्जनकज्ञानविषयत्वस्य प्रामाण्येऽभावेन शङ्कानुत्था(य[1])नादिति केचित्। तदापाततः। प्रामाण्योपस्थित्यनन्तरमर्थोपस्थितेरपि भावेन तज्जनकज्ञानविषयत्वस्य प्रामाण्ये शङ्कितु शक्यत्वात्। तस्मात् तत्रेदं दूषणं — प्रामाण्यस्यार्थमात्रकोट्युपस्थापकत्वमेव, अप्रामाण्यस्य चार्थाभावकोट्युपस्थापकत्वमेवेति प्रामाण्येऽप्रामाण्ये वा नोभयकोट्युपस्थापकत्वं शङ्कितुं शक्यत इति।

नन्वेवमपि शब्दोऽनित्यः शब्दत्वादित्यत्र पक्षे साध्यानिश्चयदशायां शब्दत्वस्यानित्यत्वव्याप्तिर्यत्र शाब्दादिना गृहीता, तद्दशायामतिव्याप्तिः सपक्षघटादिव्यावृत्तत्वस्य शब्दत्वे तदापि ज्ञानादिति चेद्, न। व्याप्तिग्रहस्यैव सपक्षवृत्तित्वज्ञानत्वेन तद्दशायां सपक्षव्यावृत्तत्वाज्ञानात्। न च तत्र व्यतिरेकसहचाराद् व्यतिरेकव्याप्तिग्रहः, तद्दशायां सपक्षव्यावृत्तत्वज्ञानाददतिव्याप्तिरिति वाच्यम्। व्यतिरेकसहचारादन्वयव्याप्तिग्रहमत एवास्य लक्षणत्वात्। अन्वयव्याप्तिग्रहस्य च साध्यनिश्चयं विनासम्भवात् पक्ष एव साध्यनिश्चय इति तद्व्यावृत्तत्वस्य तदा ज्ञानासंभवादिति। यद्वा, विशेषादर्शनदशायामेव सपक्षव्यावृत्तत्वज्ञानं संशय-

---

१. 'त्र भ' क. पाठः.

कोट्युपस्थापकमिति विशेषदर्शनदशायां सपक्षव्यावृत्तत्वज्ञानेऽपि न लक्षणातिव्याप्तिशङ्केति दिक्। यत्तु दूषणमिह नवैरभ्यधायि — सपक्षव्यावृत्तत्वादिज्ञानं नोभयोपस्थापकम्। असाधारणे परस्परप्रतिबन्धेनैकस्याप्यनुपस्थितेरिति। तदसत्। कोट्युपस्थितौ परस्परप्रतिबन्धाभावात्। अन्यथा क्वापि न स्यादित्यसाधारणस्थले विशिष्य दोषाभिधानस्यात्यन्तासङ्गतत्वात्। न च संशये परस्परप्रतिबन्धः। तथा सति संशयोत्पादः क्वापि न स्यादेव। विरुद्धनिर्णयसामग्र्यैव तदुत्पादनादिति न किञ्चिदेतत्।

इदं तु दूषणमिह संभवति — साधारणत्वं न सपक्षविपक्षवृत्तित्वम्। अयं गौरश्वत्वादिति विरुद्धसङ्कीर्णसाधारणाव्याप्तेः। किन्तु विपक्षवृत्तित्वमात्रम्। तच्च साध्याभावकोटिमात्रोपस्थापकं, तत्साहचर्यात्। न तु साध्यकोट्युपस्थापकमपीत्युभयकोट्युपस्थापकत्वं तत्राव्याप्तमिति।

अत्र प्रतिभाति — विपक्षवृत्तित्वं दूषकताबीजम्। विभाजकोपाधिस्तु विरुद्धव्यावृत्तं सपक्षविपक्षवृत्तित्वमेव। एवमसाधारणस्यापि सपक्षविपक्षव्यावृत्तत्वमेव विभाजकोपाधिः। दूषकतोपाधिस्तु सपक्षव्यावृत्तत्वमेवेति तत्त्वम्। वस्तुतस्तु साध्यव्याप्यत्वनिश्चयविरोधिसाध्याभाववद्वृत्तिमात्रवृत्त्यन्यहेत्वाभासतोपाधित्वमनैकान्तिकत्वम्। तादृशोपाधिश्च विपक्षवृत्तित्वादित्रयमेव। साध्यसमानाधिकरणेऽपि तत्त्रयस्य वृत्तेः साध्याभाववद्वृत्तिमात्रावृत्तित्वात्। न चैवमपि व्याप्यत्वासिद्धचतिव्याप्तिः। तदन्यत्वस्यापि विशेषणत्वादिति दिक्॥

इति सव्यभिचारसामान्यनिरुक्तिः।

---

## अथ साधारणग्रन्थः।

तत्र साधारणत्वं विपक्षवृत्तित्वमिति मणिकृतः। विपक्षत्वमिह साध्यवदन्यत्वम्। अन्योन्याभावगर्भव्याप्तिज्ञानस्यानुमितिहेतुत्वादिति केचित्। तन्न। अन्योन्याभावगर्भव्याप्तिज्ञानस्यैव हेतुत्वमिति पक्षेऽपि अत्यन्ताभावगर्भव्यभिचारज्ञानस्यान्वयव्यतिरेकाभ्यां ग्राह्याभावानवगाहिनोऽपि प्रतिबन्धकत्वात्। वस्तुतोऽत्य-

---

१. 'दन्त्यं स' क. पाठः.

न्ताभावादिगर्भव्याप्तिधीरपि हेतुरेवेति यावदभावगर्भा व्याप्तिस्तावदभावगर्भं विपक्षत्वम् । न चैवमननुगमः । सहचारज्ञानसहकार्यभावप्रतियोगिज्ञानविषयतावच्छेदकत्वेनानुगमात् । व्यभिचारज्ञानाभावसहकृतसहचारज्ञानस्य व्याप्तिधीहेतुत्वादित्यन्ये । तच्चिन्त्यम् । असहचरि(त)त्वनिश्चयाव्याप्यत्वनिश्च(य)योरप्यभावस्य व्याप्यत्वनिश्चयहेतुतया सहचारधीसहकारित्वस्य तदभावेऽपि सत्त्वेन विरुद्धव्याप्यत्वासिद्ध्यतिव्याप्तेः । तस्मात् सहचाराप्रतियोगित्वे सतीत्यपि विशेषणं देयम् । असहचारविशिष्टासहचारयोश्च विरुद्धव्याप्यत्वासिद्ध्योः सहचारनिरूप्यत्वादतिव्याप्तिनिरासात् । यद्वा, अनुमितिहेतुव्याप्तिज्ञाने ग्राह्याभावावगाहि यज्ज्ञानं संशयसाधारणं प्रतिबन्धकं, तत्त्वं साधारणत्वम् । विरुद्धत्वादिसंशयश्च न प्रतिबन्धक इति नातिव्याप्तिरिति तत्त्वम् ।

अत्रोपाध्यायाः — साध्याभाववद्वृत्तित्वज्ञानमात्रं प्रतिबन्धकं, लाघवात् । न तु निश्चयमात्रं, गौरवादिति वदन्ति । तन्न । तथा सति संशयरूपव्यभिचारज्ञानस्य पक्षीयस्य सर्वत्र सत्त्वादनुमानमात्रविलयापातादित्युक्तत्वात् । न च तर्काच्छङ्कानिवृत्तावनुमानप्रवृत्तिः । अनुभवविरोधात् । सन्दिग्धसाध्यवति सर्वत्र तर्कापेक्षाया अदर्शनादिति प्रागेवोदितत्वात् । किञ्च, विद्यमानव्यभिचारशङ्का न तर्कनाश्या । तस्याः स्वोत्तरभाविगुणा(न ?)न्तरमात्रनाश्यत्वेन तर्कपर्यन्तानपेक्षणात् । नाप्यनागतशङ्कानुत्पादकत्वं तर्कस्येति वाच्यम् । तथा सति विद्यमानशङ्काया अनुमानप्रतिबन्धस्य दुर्वारत्वापातात् । न च तर्काभावविशिष्टव्यभिचारधीः प्रतिबन्धिकेति व्यभिचारसंशयः सन्नपि तर्ककाले न प्रतिबन्धक इति वाच्यम् । तथा सति व्यभिचारनिश्चयस्यापि तर्ककाले प्रतिबन्धकता न स्यादिति संशये उत्तेजको वाच्य इति तस्य पृथक् प्रतिबन्धकताकल्पनेऽतिगौरवमिति ।

मिश्रास्तु — साध्याभावांशनिश्चयीभूतसाध्याभाववद्वृत्तित्वज्ञानत्वेन प्रतिबन्धकता । तेन व्यभिचारसंशयात् पक्षीयाद् नानुमानविलयः । नापि साध्याभाववत्त्वेन निश्चिते हेतुसंशयस्याप्रतिबन्धकत्वमिति वदन्ति । तदपि चिन्त्यम् । व्यभिचारनिश्चयत्वेनैव घटाभावादि(ति ?)निश्चयवद् ग्राह्याभावनिश्चयत्वेन प्रतिबन्धकत्वम् । न तु संशयस्यापि । विशिष्य तथा कल्पने मानाभावात् । न चैवं

---

१. 'का' क. पाठः.

सति सन्दिग्धानैकान्तिकोच्छेदः। उपाध्यादिसन्देहाहितव्यभिचारसंशयस्य सन्दिग्धानैकान्तिकत्वात्। तस्य चान्याहितसंशयत्वेन ग्राह्यान्तरसंशयसाधारण्येनैव प्रतिबन्धकत्वात्। तस्मात् स्वारसिकः साध्याभाववति हेतुसंशयो वा हेतुमति साध्याभावसंशयो वा न दोषः। अन्याहितस्तु प्रतिबन्धक एव। न केवलमिहैव तत्। किन्तु घटाभावादिसंशयेऽप्येषैव रीतिरिति प्रतिभाति। यत्त्वत्र कश्चिद्—व्यभिचारज्ञानस्य न ग्राह्याभावज्ञानत्वेन प्रतिबन्धकता। तथा सत्यत्यन्ताभावगर्भव्याप्तिज्ञानेऽन्योन्याभावगर्भव्यभिचारज्ञानं प्रतिबन्धकं न स्यादिति व्यभिचारज्ञानस्य पृथक् प्रतिबन्धकता वाच्या। तथा चान्यत्राक्लृप्तो ग्राह्याभावसंशयः प्रतिबन्धकतया कल्प्यते। ज्ञानत्वेन प्रतिबन्धकतायां लाघवादित्यवोचत्। तदभद्रम्। व्यभिचारज्ञानत्वेन प्रतिबन्धकतायां पक्षीयव्यभिचारसंशयेनानुमानोच्छेदस्योक्तत्वात्। साध्याभावांशनिश्चयीभूतत्वविशेषणे च विपरीतगौरवात्, तदपेक्षया साध्याभाववद्वृत्तित्वनिश्चयत्वस्य लघुत्वात्। किञ्च, कदाचिदस्तु व्याप्तिः। सर्वस्यामपि हेत्वधिकरणत्वावच्छेदेन साध्यवत्त्वं ग्राह्यम्। तथा चात्यन्ताभावगर्भायामप्यन्योन्याभावगर्भव्यभिचारधीर्ग्राह्याभावावगाहितयैव प्रतिबन्धिका। अत्यन्ताभावज्ञाने ग्राह्याभावज्ञानत्वेन प्रतिबन्धकत्वात्। साध्यवदन्योन्याभावाभावात्मकसाध्यज्ञाने तद्वदन्योन्याभावज्ञानस्यापि तदत्यन्ताभावज्ञानवत् तत्त्वेन प्रतिबन्धकत्वौचित्यात्। अवश्यं चैतदभ्युपेयमेव। अन्यथा घटान्योन्याभावज्ञानस्य घटत्वज्ञानप्रतिबन्धकता न स्यात्। तदन्योन्याभावस्य ग्राह्यघटत्वाभावानात्मकत्वादित्यलम्। किं बहुना, एवं च साध्याभावांशनिश्च(यत्रिष)यीभूतसाध्याभाववद्वृत्तित्वस्य साधारणोपाधित्वे निश्चयांशस्यानित्यत्वादनित्यदोषताप्रसङ्गः। अन्यथा सपक्षव्यावृत्तत्वरूपासाधारणत्वोपाधिकस्यासाधारणस्याप्यनित्यदोषता न स्यादिति दूषणं शङ्कापथमेव नाधिरोहति। साध्याभाववद्वृत्तित्वस्यैव साधारणोपाधितया निश्चयस्याप्रवेशेनोक्तदोषाभावात्। न चैवमसाधारणत्वमपि साध्यवद्व्यावृत्तत्वमेवास्त्विति तत्रापि निश्चयाप्रवेशाद् नित्यदोषतापात इति वाच्यम्। एवं सति सद्धेतोः शब्दत्वस्यानित्यत्ववतः सर्वस्माद् व्यावृत्तत्वाभावेनासाधारणत्वाभावप्रसङ्गादिति दिक्। यत्तु मिश्रैः समाहितं—यद्विषयतया ज्ञानं प्रतिबन्धकं, तद्विषय-

---

१. 'त्यत्वदो' क. पाठः.

त्वावच्छिन्ने तस्मिन् सति यत्र प्रतिबन्धनियमस्तत्र तज्ज्ञानविषयस्य नित्यदोषत्वम्। अस्ति चैतत् साधारणत्वे। तज्ज्ञाने सति व्याप्तिज्ञानस्य कदाप्यसंभवात्। असाधारणे तु सपक्षव्यावृत्तत्वज्ञानेऽपि विशेषदर्शनदशायामप्रतिबन्धान्न नित्यदोषत्वमिति। तत्तु विचार्यम्। यादृशस्य ज्ञानस्य विरोधिता, तादृशे सति प्रतिबन्धनियमे सति नित्यदोषत्वमित्येव वाच्यम्। अन्यथा व्यभिचारज्ञाने यत्राप्रामाण्यशङ्का, तत्र प्रतिबन्धकत्वस्याभावात् तस्याप्यनित्यदोषतापातात्। अस्ति चैतदप्रामाण्यशङ्काशून्यव्यभिचारज्ञानवद् विशेषादर्शनविशिष्टसपक्षव्यावृत्तत्वज्ञानस्य प्रतिबन्धकत्वनियम इति नित्यदोषता तस्य दुर्वारैवेति सङ्क्षेपः॥

इति साधारणग्रन्थः।

## अथासाधारणग्रन्थः।

असाधारणत्वं तु सपक्षविपक्षव्यावृत्तत्वम्। तत्र च विपक्षव्यावृत्तिरनुकूलैव। सपक्षव्यावृत्तिर्दूषणम्। तच्च साध्यतदभावोत्थापकतया दूषणमिति मणिकृतः। अत्र साध्यतदभावोभयानुमित्यनुकूलव्याप्तिविशिष्टपक्षधर्मताज्ञानविषयत्व साध्यतदभावोत्थापकत्वम्। अनुमितिश्च परस्परप्रतिबन्धेन न जायते। अत एवायं तर्हि सत्प्रतिपक्ष एवेत्याशङ्कां मनसि निधाय सत्प्रतिपक्षे द्वौ हेतू अत्र त्वेक एवेति ततो भेद इत्युक्तं मणिकृतेत्युपाध्यायाः।

अत्र मिश्राः — हेत्वैक्यानैक्यमकिञ्चित्करं हेत्वाभासैक्यानैक्ये। किन्तु प्रतिबन्धकतावच्छेदकैक्यानैक्यम्। तच्च सत्प्रतिपक्षसमानमेवेति कथं तद्भेदः। किञ्च, एकस्य कथं परस्परविरुद्धसाध्यतदभावव्याप्तिग्रहः। एकत्र विरुद्धोभयाज्ञानादिति नैवं व्याख्या युज्यते। किन्तु साध्यतदभावोत्थापकत्वमिह तदुभयानुमित्यनुकूलतदुभयव्याप्तिग्रहसामग्रीसहकृतत्वम्। तथा चात्र साध्याभावहेत्वभावसहचारग्रहः साध्यहेत्वभावसहचारग्रहश्च साध्यतदभावव्याप्तिग्रहकारणे हेतौ (सत ? स्त) इति परस्परविरुद्धव्याप्तिग्राहकसामग्र्या नैकत्रापि व्याप्तिग्रह

---

१. 'यत्वस्य' क पाठः.

इत्यसाधारणस्य दूषकताबीजम् । अत एव यद्येवं तदा सत्प्रतिपक्षे कथं परस्परविरुद्धव्याप्तिग्रह इत्याशङ्कायामुक्तं सत्प्रतिपक्षे द्वाविति । तथा चैकस्मिन् परस्परविरुद्धव्याप्तिग्रहो न संभवति, न तु भिन्नेऽपीति न विरोध इत्याहुः ।

अत्र चैतत् तत्त्वम् — अन्वयव्याप्तिग्रहः प्रकृते शङ्कितोऽपि न । एकहेतोः साध्यतदभावोभयनियतसामानाधिकरण्यस्य साध्यतदभावयोरैकाधिकरण्ये पर्यवसन्नस्य विरुद्धतया ज्ञातुमशक्तेः । व्यतिरेकव्याप्तिग्रहस्तु संभवति । शब्दत्वाभावे नित्यत्वानित्यत्वव्यापकत्वग्रहे बाधकाभावात् । तदपि वृत्तिमत्त्वास्फूर्तिदशायाम् । वृत्तिमत्त्वस्फूर्तावपि यद् वृत्तिमत् तन्नित्यानित्यान्यतरवृ(त्तिरि?त्ती)त्याकारकव्याप्तिस्मृत्यभावे सत्युभयव्यापकत्वग्रहो न विरुद्ध इति तादृशस्थले सत्प्रतिपक्षतयैवासाधारणस्य दोषता । तदभिप्रायिकैवोपाध्यायोक्तिरपि । यदि च वृत्तिमद् नित्यानित्यान्यतरवृत्त्येवेति स्फूर्तिः, तदा व्यतिरेकव्याप्तिग्रहोऽप्यसंभवी । सकलनित्यव्यावृत्तत्वस्य सकलानित्यव्यावृत्तत्वस्य च शब्दत्वे वृत्तिमत्त्वेन ज्ञाते ज्ञातुमशक्यत्वात् । तथा च सपक्षविपक्षव्यावृत्तत्वज्ञानरूपसाध्यतदभावव्याप्तिग्रहसामग्रीसंभवे सत्प्रतिपक्षान्न व्याप्तिनिश्चयः । किन्तु परस्परव्याप्तिसंशय इत्यसाधारणस्य दूषकताबीजम् । इदमेवाभिप्रेत्य व्याप्तिग्रहसत्प्रतिपक्षः पक्षधरमिश्रैरुक्त इति ।

इदं त्ववधेयं — विरुद्धव्याप्तिग्राहकसामग्रीत्वेनासाधारणस्य दूषकतापक्षेऽपि हेत्वैक्य[1]मकिञ्चित्करम् । हेतुनानात्वेऽपि तत्संभवात् । यथा अयमनित्यः पटत्वाद्, नित्योऽयं तन्तुसमवेतद्रव्यत्वादित्यत्र । इहैकत्रैवाधिकरणे उभयहेत्वोरुभयसाध्यव्याप्तिग्रहप्रसक्तौ विरोधेन तदग्रहात् । अत्र त्वेक एवेति मणेरेकाधिकरण एवेत्यर्थादिति दिक् ॥

इत्यसाधारणग्रन्थः ।

---

## अथानुपसंहारिग्रन्थः ।

अनुपसंहारी च केवलान्वयिधर्मावच्छिन्नपक्षक इति वदन्ति । अस्यार्थः —

---

१. 'क्यं कि' क. पाठः

स्वरूपसत्साध्यसिद्धिनिवर्त्यसंशयविषयोपस्थितया(त ? व)द्वस्तुवृत्तित्वव्याप्तिग्राहकसत्ताकत्वम् । अत एव केवलान्वयिसाध्यकानुपसंहारिण्यपि नाव्याप्तिः । साध्यासिद्धिनिवर्त्यसंशयस्य प्रमेयत्वमिह न वेत्यादिरूपस्य तत्रापि प्रसिद्धेः । अत एव च यत्र वह्निसन्देहस्तत्र सर्वत्र धूमस्य सकलवृत्तित्वेनाज्ञानान्न(?)व्याप्तिसम्भावना, तत्रापि व्याप्तिग्राहक(त्व ? )स्य धूमसत्त्वस्य धूमाभावसत्त्वस्य च सर्वत्र ज्ञानात् । ननु तथापि सकलधूमाधिकरण एव यत्र वह्निसन्देहः, तदनन्तरं सर्वं धूमवद् वह्निमदित्यनुमितिः, तदानुपसंहारित्वं न स्यात् । यावदुपस्थितवस्तूनां साध्यसंशयाविषयत्वादिति चेद्, न । तत्र व्यतिरेकसहचारेणान्वयव्याप्तिग्रहसम्भवादनुपसंहारित्वाभावस्येष्टत्वादिति । यथाश्रुते तु सर्वं प्रमेयमित्यादीनां विशेषदर्शनदशायामपि केवलान्वयिधर्मावच्छिन्नपक्षकत्वेनानुपसंहारित्वापत्तिः, सर्वं धूमवद्वह्निमदित्यस्य विशेषादर्शनदशायामप्यनुपसंहारित्वाभावापत्तिः, केवलान्वयिधर्मावच्छिन्नपक्षत्वाभावादित्यादि दूषणं द्रष्टव्यम् ।

अत्र वदन्ति — अनुपसंहारी न हेत्वाभासः । हेतुमति सर्वत्र साध्यसंशयात् सहचारनिश्चयाभावेन व्याप्तिनिर्णयाभावः । कारणाभावादेव कार्याभावोपपत्तौ प्रतिबन्धकाकल्पनात् । किञ्च, हेतुमति साध्यसन्देहो व्यभिचारसंशयः । स च न प्रतिबन्धकः । पक्षीयसाध्यसंशयेनानुमानमात्रोच्छेदप्रसङ्गात् । भवतु वा प्रतिबन्धकः । तथापि साधारण एवायमन्तर्भूतो न पृथग् हेत्वाभास इति ।

अत्र मिश्राः — हेतुमति सर्वत्र साध्यसन्देहोऽनुपसंहारी । स च हेतौ साध्यसामानाधिकरण्यसंशयसामग्रीत्वेन प्रतिबन्धकः । हेतुमति साध्यसंशयानन्तरं हेतुः साध्यसमानाधिकरणो न वेति संशयस्यौचित्यावर्जितत्वात्, प्रामाण्यसंशयवदिति वदन्ति ।

अत्र कश्चित् — संशयसामग्री न निर्णयप्रतिबन्धिका । कारणाभावादेव तदा निर्णयाभावात् । तथा च सहचारनिश्चये कथमस्य प्रतिबन्धकत्वं, येन हेत्वाभासता स्यादित्याह । त(त्रि ? न्न । नि)श्चयद्वयसामग्र्या एव संशयजनकतया तदप्रतिबन्धकत्वे संशयकाले निर्णयापातस्य वज्रलेपायितत्वादिति ।

---

१. 'तविषयात' क. पाठः.

अन्ये तु — हेतुमति सर्वत्र साध्यसंशयः साध्यसामानाधिकरण्यसंशयसामग्रीत्वेन यदि प्रतिबन्धकः, तदा प्रथमसंशयसामग्र्यपि प्रतिबन्धिकास्तु । संशयसामग्रीत्वाविशेषादिति । तदपि न । हेतुमति साध्यसन्देहस्य स्वारसिकस्याप्रतिबन्धकतया तत्सामग्र्या न प्रतिबन्धकता । प्रतिबन्धकसामग्रीत्वाभावात् । हेतुमति साध्यसन्देहाहितस्य हेतुसाध्यसामानाधिकरण्यसंशयस्यान्याहिततया प्रतिबन्धकत्वेन तत्सामग्रीभूतस्य प्रथमसन्देहस्य प्रतिबन्धकत्वौचित्यादिति दिक् ॥

इत्यनुपसंहारिग्रन्थः ।

---

## अथ विरुद्धग्रन्थः ।

विरुद्धश्च साध्यव्यापकाभावप्रतियोगीति मणिकृतः । नन्विदं लक्षणमाकाशाद्यवृत्तिसाध्यकविरुद्धाव्याप्तम् । साध्याधिकरणाप्रसिद्ध्या हेत्वभावे तद्व्यापकत्वासंभवात् । न च तस्यासंग्राह्यत्वमेवास्तु । दूषकताबीजसामानाधिकरण्यज्ञानविरोधित्वस्य सत्त्वेनासंग्राह्यत्वाभिधानस्य निर्वचनासामर्थ्यद्योतकत्वात् । किञ्च, साध्यव्यापकाभावप्रतियोगिसंबन्धकत्वज्ञानमपि सामानाधिकरण्यज्ञानविरोधिहेत्वाभासान्तरं स्यात् । उक्तविरुद्धोपाध्यनन्तर्भावादिति ।

अत्र वदन्ति — साध्यव्यापकाभावप्रतियोगित्वं न सकलविरुद्धसाधारणं विभाजकत्वेनोक्तम् । किन्तु क्वचिदेतत् क्वचिदन्यदित्युक्तदोषाभावः । न चैवं विभाजकोपाधिः सर्वसाधारणो न प्राप्त इति वाच्यम् । हेतुनिष्ठसामानाधिकरण्यधीप्रतिबन्धकनिश्चय(ता?)विषयतावच्छेदकधर्मवत्त्वेन सर्वसाधारणानुगमकरणात् । अत एव किञ्चेत्यादिदोषोऽपि निरस्तः ।

अत्र केचित् — हेतुमति साध्यस्य ग्राह्यतया हेतुमति साध्याभावज्ञानं (साध्य)ग्र(ह)प्रतिबन्धकं, ग्राह्याभावावगाहित्वात् । न तु साध्यवति हेतुर्ग्राह्यः, येन साध्यवति हेत्वभावधीर्विरोधिनी स्यात् । किञ्च, सद्धेतावपि साध्य(वाक्य? वत्य)योगोलकादौ धूमाभावसत्त्वात् तत्रापि सामानाधिकरण्यज्ञानं न स्यादिति । तद(प्यु? प्यनु)पपत्तिविलसितम् । साध्यहेतुसामानाधिकरण्यस्य ग्राह्यस्य हेतुमति

सर्वत्र साध्याभावज्ञानाद्वा साध्यवति सर्वत्र हेत्वभावज्ञानाद्वा विघटनात्। ऐकाधिकरण्यस्य तत्रापि विरोधे सत्यसंभवात्। अत एव न (सि ? स)द्धेतावतिप्रसङ्गः। तत्र साध्यवति क्वचिदेव हेत्वभावज्ञानात्। सर्वत्र तज्ज्ञानस्यैव सामानाधिकरण्यज्ञानविरोधित्वात्। अत एव च न व्यभिचारसङ्करोऽपि। हेतुमति साध्याभावज्ञानस्य सामानाधिकरण्यज्ञानाविरोधित्वात्। अत एव 'हेतुमति सर्वत्र साध्याभावज्ञानस्य व्यभिचारज्ञानत्वेनैव प्रतिबन्धकत्वम्। अन्यत्र कल्पनात्। (न) विरुद्धज्ञानत्वेन' इत्यपि कस्यचित् प्रलपितमपास्तम्। हेतुमति सर्वत्र साध्याभावज्ञानस्योभयरू(पत्वेना ? पेणा)पि प्रतिबन्धकत्वात्। साध्यवति सर्वत्र हेत्वभावज्ञानस्य सामानाधिकरण्यधीविरोधिज्ञानत्वेन पृथक्प्रतिबन्धकत्वकल्पनात्। व्यभिचारस्य तत्रासंस्पर्शात्। साध्याभावानवगाहित्वात्।

केचित्तु — हेतुमति साध्याभावज्ञानं व्यभिचारज्ञानतया, हेतुमति साध्याधिकरणत्वाभावज्ञानं ग्राह्यसामानाधिकरण्याभावावगाहितया प्रतिबन्धकम्। तथा च नानयोः सङ्कर इत्याहुः।

अत्र नव्याः — साध्याधिकरणत्वाभावज्ञानमपि हेतुमति साध्याभावावगाहितया व्यभिचारज्ञानत्वेनैव प्रतिबन्धकं, न तु विरुद्धत्वज्ञानत्वेनेति दूषयन्ति। तन्न। हेतुमति साध्याभावज्ञानस्याव्यभिचारज्ञानविरोधित्वेन प्रतिबन्धकत्ववद् हेतुमति साध्याधिकरणत्वाभावज्ञानस्यापि सामानाधिकरण्यज्ञानविरोधितया प्रतिबन्धकत्वात्। ग्राह्याभावावगाहित्वस्य समानत्वात्। विनिगमकान्तरस्याभावात्। वस्तुतः साध्याधिकरणे हेत्वभावज्ञानस्य व्यभिचारज्ञान(स्य ? त्व)शङ्कापि नास्तीति तत्रैव विरुद्धस्यासाङ्कर्यमित्यवधेयम्। यत्तु — व्यभिचारज्ञानं संशयसाधारणं प्रतिबन्धकं, विरुद्धत्वज्ञानं च निश्चयरूपमेवेति भेद इति। तन्न। व्यभिचारज्ञानस्यापि संशयरूपस्य प्रतिबन्धकत्वे मानाभावात्। ग्राह्यान्तरसाधारण्येनैव प्रतिबन्धकत्वसम्भवे व्यभिचारज्ञानस्य पृथक् प्रतिबन्धकत्वाकल्पनादिति पूर्वमेवावेदितत्वादिति सङ्क्षेपः॥

इति विरुद्धग्रन्थः।

---

## अथ सत्प्रतिपक्षग्रन्थः ।

सत्प्रतिपक्षता च साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गतेति मणिकृतः । अत्र बाधसामग्र्या प्रतिरुद्धकार्ये हीनबलवल्लिङ्गेऽतिव्याप्तिर्मा भूत् । अतः समानपदम् । तदर्थश्च निर्णयाजनकत्वम् । बाधसामग्री च बाधरूपनिर्णयजनिकैवेति वदन्ति ।

अत्रोपाध्यायाः — बाधसामग्रीमादाय हीनबलेऽतिव्याप्तिवारणाय समानपदमित्युक्तम् । (तन्न ।) अधिकबलत्वस्य सापेक्षतयाधिकबलत्वस्य ज्ञानदशायामत्र न्यूनबलत्वज्ञानस्यावश्यकत्वात् तेनैव तत्रानुमित्यनुत्पत्तावाधिकबलत्वज्ञानस्य प्रतिबन्धकत्वे मानाभावात् । तस्मात् पारिभाषिकमिह प्रतिबन्धकत्वम् । सा च विरुद्धत्वे सति विद्यमानत्वम् । तच्चाप्रतिबन्धकीभूतायामप्याधिकबलोपस्थितावस्तीति तामादाय न्यूनबलातिव्याप्तिवारणाय समानपदमित्याहु ।

अत्र मिश्राः — अधिकबलत्वं हि गृहीतप्रमात्वम् । तच्चैकलिङ्गस्य यदा, तदापरलिङ्गस्य गृहीताप्रमात्वरूपं न्यूनबलत्वमित्यत्र मानाभावः । तदुभयलिङ्गज्ञानप्रमात्वाप्रमात्वयोर्भिन्नविषयकतया समानग्रहसामग्रीत्वाभावात् । तस्मादधिकबलत्वज्ञानं विरोध्येवेति प्राच्यं व्याख्यानं भव्यमेव । स्वीयपरिभाषा तु न भव्या । एवं सति हीनबलोपस्थितेरपि पारिभाषिकप्रतिबन्धकतामादायाधिकबलोपस्थितौ लक्षणातिव्याप्तेर्दुष्परिहरत्वात् । नहि समानपदाद् हीनबलोपस्थितिर्वारयितुं शक्यते । निर्णयाजनकत्वरूपसमानत्वस्य तत्र सत्त्वादिति दूषयन्ति ।

अत्र नव्याः — यदा चैकपरामर्शे प्रमा(त्व)ग्रहः, तदापरपरामर्शे(न ?) च नाप्रमात्वग्रहः । तथासति प्रतिबन्धकत्वं सत्प्रतिपक्षतयैव । प्रमात्वा[1]ग्रहस्याकिञ्चित्करत्वात् । अप्रामाण्यशङ्काशून्यत्वस्योभयसाधारणत्वात् । तथा च न तदातिव्याप्तिशङ्कापि । सत्प्रतिपक्षतयैव सङ्ग्राह्यत्वात् । अथ यदैकत्र प्रमात्वग्रहः तदा भिन्नग्रहसामग्रीकमप्यप्रमात्वं प्रतिबध्यलिङ्गपरामर्शे गृह्यत इति मतं, तदा कारणीभूताप्रमात्वशङ्काशून्यपरामर्शाभावादेवानुमित्यनुत्पाद इत्यधिकबलोपस्थितेः

---

१. 'त्व' क पाठः.

प्रतिबन्धकत्वं नास्त्येवेति न तमादाय न्यूनबलोपस्थितावतिव्याप्तिरित्युपाध्यायोक्तदूषणं समीचीनमेवेति वदन्ति ।

अत्र ब्रूमः — यत्रोभयोरपि परामर्शयोरप्रामाण्यशङ्का नास्ति, एकत्र च प्रमात्वं गृहीतं, तत्राप्रामाण्यशङ्काशून्यत्वस्योभयसाधारणतया प्रमात्वग्रहस्याधिकबलत्वसम्पादकता संभवत्येव । विपक्षबाधकतर्कसत्त्वात् । तथा च तत्र गृहीतप्रमात्वपरामर्शप्रतिरुद्धकार्येऽगृहीतप्रमात्वे परामर्शान्तरेऽतिव्याप्तिः संभवत्येवेति तदर्थं समानपदमिति मिश्राशयात् । वस्तुतो यज्ज्ञानं यत्र प्रतिबन्धकं, तत्सामग्र्यपि तत्र प्रतिबन्धिकेति बाधसामग्र्याः कथं न प्रतिबन्धकत्वम् । बाधप्रतिबन्धकत्वस्य व्यवस्थाप्यत्वात् । यथा च तथा सति बाधसामग्री न हेत्वाभासः, तथोक्तं हेत्वाभासलक्षणे । यत्तूपाध्यायपरिभाषापक्षे मिश्रैर्दूषणमुक्तं — हीनबलोपस्थितिमादायाधिकबलोपस्थितावतिव्याप्तिरिति । तत्तु(न।) अन्यूनाधिकत्वरूपस्य समानत्वस्योपाध्यायाभिप्रेतत्वात्, तस्य च न्यूनबलोपस्थितावधिकबलोपस्थितौ वा विरहेणानतिप्रसङ्गादिति दिक् । अत्र च नायं व्याप्तपक्षधर्मः पर्वतवृत्तित्वादित्यत्रायं व्याप्तपक्षधर्म इति निर्णयाजनकबाधरूपबलोपस्थित्या प्रतिरुद्धकार्ये पर्वतवृत्तित्वरूपलिङ्गेऽतिव्याप्तिर्मा भूत् । अतः साध्यविरोध्युपस्थापनसमर्थेति विशेषणम् । व्याप्तिविशिष्टपक्षधर्मतोपस्थितिजननस्वरूपयोग्यत्वं प्रथमविशेषणार्थः । तेन केवलान्वयिसत्प्रतिपक्षे नाव्याप्तिः ।

नन्वाद्यं विशेषणं तथापि व्यर्थमेव । व्याप्तिविशिष्टपक्षधर्म इति बाधरूपोपस्थितेः बलोपस्थितित्वेन प्रतिबन्धकत्वाभावात् । तथा विवक्षायाश्चावश्यकत्वात् । अन्यथा अनित्यत्वव्याप्यं कृतकत्वमिति सत्प्रतिपक्षात्मके परामर्शे नित्यत्वविरुद्धं जन्यत्वमित्यपि यत्र दैवादवसितं, तत्र विरुद्धत्वेन ज्ञाते जन्यत्वेऽतिव्याप्तिप्रसङ्गात् । विरुद्धत्वज्ञानस्य समूहालम्बनरूपत्वेन बलोपस्थितिरूपत्वसत्त्वादिति चेद्, न । बलोपस्थितित्वस्य स्व(बलो ? परो)पस्थितिसाधारण्येन प्रतिबन्धकतानवच्छेदकतया साध्यविरो(धित्वा ? धीत्या)देरावश्यकत्वात् । तथा च तद्बलात् साध्यविरोधिनोऽन्यूनबलोपस्थि(त ? ति)त्वं प्रतिबन्धकतावच्छेदकं लभ्यते । तदयं लक्षणार्थः—साध्यविरोध्यन्यूनव्याप्तिपक्षधर्मतोपस्थितित्वावच्छिन्नप्रतिबन्धकता(यन्निष्ठा,)निर्णयाजनकतादृगुपस्थितिप्रतिरुद्धकार्यलिङ्गत्वमिति । सत्प्रतिपक्षे तु परामर्शद्वयं क्वचित् क्वचिदेक एव परामर्शः सामग्रीबलाद् भवति । न चाद्यपक्षे द्वितीय-

यपरामर्शोत्पत्तिकाले प्रथमेनानुमितिरेव न कुत इति वाच्यम्। सिद्ध्यनन्तरं प्रथमपरामर्शोत्पादात् सिद्धिप्रतिबन्धेनाव्यवधानेनानुमित्यजननात्। द्वितीयपरामर्शे(न) प्रतिबन्धे(न?) विनश्यदवस्थेन प्रथमेनानुमित्यजननात्। यद्वा द्वितीयपरामर्शोत्पत्तिकाले कार्यतः सहभूतस्य तदभावस्याभावेनानुमित्यनुत्पत्तिः। अन्यथा विशेषदर्शनकाले संशयापत्तेरिति मणेरप्यत्र स्वरसात्।

नन्वसंभवग्रस्तमिदम्, एकत्र परस्परविरोधिसाध्यतदभावयोरिव तद्व्याप्ययोरपि ज्ञानासंभवादिति चेद्, न। उभयव्याप्यज्ञानानन्तरं साध्ययोर्यत्र विरोधस्फूर्तिः, तत्रानुपपत्त्यभावात्। न चैवं विरो(धि? ध)स्फूर्तिकाल एवानुमित्यापातः, परामर्शस्य वृत्तित्वादिति(?) वाच्यम्। विरोधज्ञानस्य प्रतिबन्धकत्वादिति बहवः। तच्चिन्त्यम्। तथा सति विरोधधियः प्रतिबन्धकत्वं, न तु परामर्शात्मकसत्प्रतिपक्षस्य। मानाभावात्। तस्मात् साध्ययोर्विरोधावधारणेऽपि हेत्वोर्विरोधानवधारणे एकत्रोभयोपनयः संभवत्येवेति ज्यायः। उत्तरकाले चानयोर्विरोधिव्याप्यतायामैकाधिकरण्यानुपपत्तिः। तदुपपत्तौ च विरोधिव्याप्यतानुपपत्तिरिति व्याप्तिपक्षधर्मतान्यतरभङ्गः कल्प्यते। न चैवं तदेव दूषणमस्तु। व्याप्त्यभावज्ञानस्य करणविघटकतयास्य च परामर्शोत्तरभावितया प्रतिबन्धकत्वायोगाद् ग्राह्याभावव्याप्यज्ञानस्याप्यन्यत्र प्रतिबन्धकतया कल्पनात् प्रतिबन्धकत्वाभावस्य वक्तुमशक्यत्वाच्च। तस्मात् सत्प्रतिपक्षे परस्परव्याप्यज्ञानं परस्परनिर्णयाय यत्र वृत्तं, (तत्र) परस्परविरोधिव्याप्यज्ञानप्रतिबन्धान्नैकमपि ज्ञानं जनयितुमीष्ट इति सिद्धान्तः।

अत्र र(क्त ? त्न)कोशकृतः — विरोधिनिर्णयद्वयसामग्र्याः संशयजनकत्वकल्पनात् परस्परगोचरा संशयरूपानुमितिरिहाप्युत्पद्यताम्। सत्प्रतिपक्षार्थोऽप्ययमेव, यत् परस्परप्रतिबन्धाद् व्याप्ययुगलज्ञानं निर्णयाजनकमिति वदन्ति।

अत्र मणिकृतः — साध्यतदभावयोर्विरोधज्ञानाद् यथैकज्ञानं परज्ञानविरोधि, तथा तद्व्याप्ययोरपि साध्यादिविरोधितया तज्ज्ञाने सति संशयरूपमपि साध्यादिज्ञानमसंभवि। प्रतिबन्धकसत्त्वे कार्योत्पादस्य वक्तुमशक्यत्वादित्याहुः।

अत्र वदन्ति — यथा ग्राह्याभावव्याप्यबुद्धेः अनुमितौ प्रतिबन्धकता, तथा विरुद्धनिर्णयसामग्र्याः संशयजनकतापि कल्पितेति संशयरूपानुमितिरावश्यिका। न च विशेषादर्शनसमवहिता निर्णयसामग्री संशयजनिका, इह तु विशेषदर्शनसमवधानात् कथं संशयं जनयत्विति वाच्यम्। अन्यतरकोटिविशेषदर्श-

नस्यैव संशयप्रतिबन्धकत्वात्। न तूभयकोटिविशेषदर्शनस्य। तथा सति स्थाणुत्वपुरुषत्वोभयांशे विशेषदर्शने सति संशयानुत्पादप्रसङ्गात्। तस्माल्लाघवाद् विरोधिनिर्णयसामग्रीत्वेन संशयजनकताकल्पनाद् अन्यतरव्याप्तिज्ञानस्यानुमित्यादौ प्रतिबन्धकता (न) कल्प्यत इति।

अत्र केचिद्—यदि विरुद्धनिर्णयसामग्रीत्वेन संशयजनकता, तथा सति विरुद्धस्मृतिसामग्रीतः संशयरूपस्मृत्यापत्तेः। तादृशस्मृतेश्चाननुभवेनेष्टापत्तेः कर्तुमशक्यत्वात्। तस्माद् विरुद्धप्रत्यक्षसामग्रीत्वेन संशयजनकता कल्प्यत इति कथं विरुद्धानुमितिसामग्र्या संशय इति। तच्चिन्त्यम्। एतावतापि विरुद्धानुभवसामग्रीत्वेन संशयजनकतायां बाधकाभावात्। परे तु—गुणविरोधस्थले विरोधिसामग्र्याः प्रतिबन्धकत्वं दृष्टम्। तत्र च परस्परप्रतिबन्धेन गुणान्तरानुत्पत्तिरेव दृष्टा। तथेहापि ज्ञानानुत्पत्तिरेव युज्यत इति न संशयरूपानुमितिरिति। तदपि चिन्त्यम्। तत्र विरोधिगुणसामग्रीत्वेन प्रतिबन्धकत्वाद् इह तु स्वाभावज्ञानसामग्रीत्वेन प्रतिबन्धकत्वाद् उभयसाधारणस्य विरोधिसामग्रीत्वस्य निर्वक्तुमशक्यत्वात्। यदपि कैश्चित् समाहितं—प्रत्यक्षे ग्राह्याभावप्रत्यक्षेणैव प्रतिब(न्धकी ? न्धः)। अनुमित्यादौ तु ग्राह्याभावज्ञानमात्रेण प्रतिबन्धः। तत्रापि ग्राह्याभावज्ञानत्वापेक्षया ग्राह्यविरोधिज्ञानत्वं लघिति तदेव प्रतिबन्धकतावच्छेदकं कल्प्यते। ग्राह्यविरोधित्वं च तदधिकरणानधिकरणत्वम् अभावतद्व्याप्यसाधारणमिति कथं विरोधिनिर्णयसामग्र्याः संशयजनकत्वेऽपि व्याप्यदर्शनरूपप्रतिबन्धके सति संशयरूपानुमितिरिति। तदपि चिन्त्यम्। तदधिकरणानधिकरणज्ञानस्यानुमितिप्रतिबन्धकत्वे वह्नि(रु ? रनु)ष्ण इत्यादि भ्रमानुमितिर्न स्यात्। वह्नित्वस्यानुष्णत्वाधिकरणानधिकरणस्य ज्ञानात्। तदधिकरणानधिकरणत्वेन ज्ञानस्य प्रतिबन्धकत्वे कथं ग्राह्याभावसाधारण्यं, तज्ज्ञानस्य तत्त्वेनाप्रतिबन्धकत्वात्। ग्राह्याभावस्य तत्त्वेन ज्ञातस्य प्रतिबन्धकत्वमिति बहुशो निवेदितत्वात्। किञ्च, बाधस्याधिकबलत्वार्थं पृथक् प्रतिबन्धकतावश्यिका। तथा च किं साधारणप्रतिबन्धकताकल्पनेन। अपि च, व्याप्यज्ञानं भवतु प्रतिबन्धकम्। तथापि तत्प्रतिबध्यतावच्छेदकं संशयसाधारणं तन्निश्चयरूपप्रत्यक्षव्यावृत्तं प्रत्यक्षनिश्चयभिन्नग्राह्यज्ञानत्वं वाच्यम्। तथा चोभयविशेषदर्शनकाले स्थाणुपुरुषसंशयानुत्पादप्रसङ्गः। तथा च तदनुरोधादन्यतरव्याप्यदर्शनत्वं विरोधितावच्छेद(कत्वं ! कं) वाच्यम्।

ोभयव्याप्यदर्शनकाले नास्तीति कथं न संशयरूपानुमितिः । यदपि —निश्चयद्वयसामग्रीतः संशय इति सत्यम् । किन्तु यादृशो निश्चयस्य ग्री, तादृशसंशयं प्रसूते । विशेषदर्शनं चावधारणात्मकनिश्चयसामग्रीत्यवधा- द्वयरूपसंशयः स्यात् । कोटिस्मृत्यादीन्द्रियसन्निकर्षादिकं तु प्रत्यक्षमात्रे साम- ते तैः प्रत्यक्षमात्रं जन्यते । तच्च संशयसामग्र्यभावे निश्चयरूपमेव । तत्सत्त्वे संशयरूपमेवेति तत्र नायं दोषः । न चोभयव्याप्यदर्शनस्थले तत्राप्यवधारण- संशयापत्तिरिति वाच्यम् । तत्रोभयव्याप्यदर्शनस्य परस्परप्रतिबन्धेन मूकत्वात् ान्यसामग्र्या च संशयोत्पादादिति । तदप्यालोचनीयम् । अवधारणज्ञानत्वं विशेषदर्शनजन्यतावच्छेदकं, व्यर्थत्वात् । अनुमितौ च तदुपस्थापकाभावादु- तभानस्य तत्रानङ्गीकारात् । भवतु वा विशेषदर्शनबलादेवानुमितौ व्यवच्छेद- म् । तत् संशयरूपानुमितावप्यस्तु । विरुद्धयोः साध्यतदभावयोरिव व्यव- द(क?)स्यापि भाने दोषाभावात् । अनुभूयते च किमयं स्थाणुरेव, किं पुरुष ति । (तस्माद्) नायं युक्तिसहः पन्थाः । यत्तु — संश(य?ये) कोट्योर्विरो(धो)ऽपि ते । अनुमितौ व्याप्तिपक्षधर्मतानुपनीततया न तद्भानमिति कथं संशयरूपा- तिरिति । तदपि न । संशयसामग्र्या एव विरोधभानम् । तत्र (तया?) तद्- याप्यदर्शनस्य तद्भानसामग्रीत्वात् ! वस्तुतो विरुद्धत्वेन ज्ञातयोः संशयको- । विरोधभानं तु संशये सामग्रीसत्त्वासत्त्वाभ्यामनियतमित्येव तत्त्वम् । यच्च तदुक्तम् — अनुभवानुसारेण न तावत् संशयरूपानुमितिः सत्प्रतिपक्षस्थले । मिनोमीत्यनुव्यवसायाभावात् । अत एव न विरुद्धानुभवसामग्रीत्वेन संशयज- ाकल्पनम् । तथा सति तत्रानुमिनोमीत्यनुव्यवसायापातात् । तस्मात् फलव- विरुद्धसत्प्रतिपक्षसामग्रीत्वेन संशयजनकतेति न संशयरूपानुमितिरिति । त- सारम् । एवं सति संशयस्थले साक्षात्करोमीत्यनुव्यवसायाभावात् तत्रापि सा- जातिर्न स्यात् । यदि च सामग्रीबलात् साक्षात्त्वसिद्धौ व्यञ्जकाभावान्न व्यक्तिः, तदा प्रकृतेऽपि मात्सर्यमुत्सार्य दीयतां दृष्टिः । तस्मात् संशयरू- मित्यनङ्गीकारो निष्प्रमाणक इति ।

अत्र ब्रूमः — निश्चयसामग्री संशयजनिकेत्येवासङ्गतम् । अन्यसामग्र्या त्राजनकत्वात् । न चैवं संशयः क्वापि न स्यादेवेति वाच्यम् । घटतदभाव- ामग्र्या विशेषणज्ञानादिरूपायाः सत्त्वेन तदुत्पत्तौ बाधकाभावात् । घटवि-

शिष्टज्ञानत्वादेरेव तद्विशेषणज्ञानादिजन्यतावच्छेदकत्वात्। तस्य च संशयसाधारण्यात्। इयानेव विशेषः—यद् भावाभावोभयज्ञानसामग्रीसत्त्वे तदुभयज्ञानं संशयात्मकम्। अन्यथा निश्चयात्मकमिति। न चात्रापि विशेषदर्शनद्वयरूपसाध्यतदभावज्ञानसामग्र्या संशयात्मकतदुभयानुमितौ बाधकाभाव इति वाच्यम्। विशेषदर्शनस्य साध्यादिनिश्चयसामग्रीत्वेन संशयजनकत्वासंभवात्। संशयान्यज्ञानसामग्र्याः संशयजनकत्वस्य वक्तुमशक्यत्वात्। न च विशेषदर्शनमपि संशयसाधारणज्ञानमात्रसामग्रीति शङ्कितुमपि शक्यते। तथा सति कोटिस्मृतिविशेषणज्ञानादिज्ञानसामान्यसामग्रीवद् विशेषदर्शनस्यापि संशयविरोधितानापत्तेः। न चैवं कोटिद्वयविशेषदर्शने सति स्थाणुपुरुषयोरपि (संशयो) न स्यादिति वाच्यम्। भावानवबोधात्। तत्रापि न निश्चयसामग्रीभूतविशेषदर्शनद्वयस्य कार्यजनकता। परस्परप्रतिबन्धात्। संशयस्तु सामान्यसामग्रीभूतकोटिस्मृत्यादेरेव। न च तत्रैव विशेषदर्शनात् प्रतिबन्धः कुतो न भवतीति वाच्यम्। नहि विशेषदर्शनत्वेन तस्य संशयविरोधिता। अपि तु विरोधिनिश्चयसामग्रीत्वेन। तच्चैक(विशे? विशेष)दर्शनस्य तदा नास्ति। विशेषदर्शनान्तरप्रतिबन्धात्। एवमपरविशेषदर्शनस्यापि। तस्मादुभयविशेषदर्शनं तत्र विरोधिगुणस्थलवत् परस्परप्रतिरुद्धमेव। सामान्यसामग्र्या संशयः। इह तु विशेषदर्शनद्वयमनुमितिद्वयसामग्रीभूतं प्रतिरुद्धमेव। अन्या च वानुमितिसामग्री नास्त्येवेति कथं संशयरूपानुमितिरुत्पद्यतां, सामग्रीविरहादिति दिक्॥

इति सत्प्रतिपक्षग्रन्थः।

---

## अथासिद्धिग्रन्थः।

असिद्धिभेदास्तु व्याप्यत्वासिद्ध्याश्रयासिद्धिस्वरूपासिद्धयः प्रत्येकमेव दोषा इति मणिकृतः। इदमुपलक्षणम्। व्याप्तिविशिष्टपक्षधर्मत्वाभावः, व्याप्तौ साध्यप्रतियोगिकत्वाभावः, हेतौ पक्षसम्बन्धाभावः, पक्षे हेतुसम्बन्धाभावः, व्याप्तिपक्षधर्मतयोः सामानाधिकरण्याभाव इत्येवं परामर्शविषयीभूततत्तत्पदार्थप्रतियोगि-

---

१. 'स्य न का' क. पाठः.

काभावाः सर्वेऽप्यसिद्धमध्यप्रविष्टा इति बोद्धव्यम् । नन्वेवं हेत्वाभासानन्त्यं स्यात् । अमीष्वितरव्यावृत्तपरस्परानुगतैकधर्माभावात् । न च परामर्शविषयाभावत्वं सर्वसाधारणं मणिकृदुक्तमेवानुगतमिति वाच्यम् । अस्यानुगतत्वेऽपीतरव्यावृत्तत्वाभावात् । बाधविरुद्धव्यभिचाराणामुक्तधर्मवत्त्वात् । साध्यतत्सामानाधिकरण्या(म ?)-व्यभिचाराणां परामर्शविषयत्वात् । न च यद्रूपावच्छिन्नविषयत्वेन परामर्शस्यानुमितिहेतुता, (य ? त)द्रूपावच्छिन्नाभावो विवक्षितः । साध्यप्रतियोगिकव्याप्तित्वप्रकारावच्छिन्नव्याप्तिविषयतया परामर्शस्य हेतुतेति व्याप्तित्वावच्छिन्नव्याप्त्यभावो भवत्यसिद्धः, न तु तद्घटकीभूतसाध्यतत्सामानाधिकरण्याव्यभिचाराणामभावादय इति वाच्यम् । एवं सति व्याप्त्यभावस्याप्यसिद्धत्वं न स्यात् । परामर्शस्य व्याप्तिविशिष्टपक्षधर्मतावगाहित्वेनैवानुमितिहेतुतया केवलव्याप्तित्वाद्यवच्छिन्नव्याप्त्यादिविषयतया तस्यानुमित्यहेतुत्वात् । परामर्शस्यानुमितिहेतुतावच्छेदकशरीरप्रवेशमात्रेण व्याप्तेरभावस्यासिद्धत्वे साध्याभावादेरपि तत्त्वं दुर्वारमेवेति ।

अत्रोच्यते — विरुद्धत्वान्यत्वे सति परामर्शं प्रति ग्राह्याभावनिश्चयत्वावच्छिन्नप्रतिबन्धकताकज्ञानविषयतावच्छेदकपर्याप्त्यधिकरणत्वं व्यभिचारादिव्यावृत्तमुक्तसर्वा(द ?)सिद्धिसाधारणमसिद्धित्वम् । व्यभिचारज्ञानस्य संशयसाधारणस्य प्रतिबन्धकतया ग्राह्याभावनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वाभावात् । बाधादेश्च परामर्शं प्रति तथाप्रतिबन्धकत्वात् । विरुद्धस्य तथात्वेऽपि तदन्यत्वविशेषणादेव वारणात् । एवमपि व्याप्त्यादिप्रविष्टत(था ? या) व्यभिचारादावतिव्याप्तिर्मा भूत् । अतः पर्याप्त्यधिकरणत्वपर्यन्तमिति न कोऽपि दोषः ।

केचित् तु — विरुद्धत्वादिहेत्वाभासचतुष्टयोपाधिभिन्नहेत्वाभासतोपाधित्वमुक्तसर्वासिद्ध्यनुगमकम् । अतो नातिव्याप्तिरित्याहुः ।

आश्रयासिद्धश्च व्योमकमलं सुरभीत्यादाविति प्राञ्चः । तन्न । व्योमकमलस्यालीकस्य सत्त्वाभावात् । तदुक्तं — 'सचेतसां मूकतैवोचिते'ति । कथं तर्ह्येतादृशप्रयोगस्य दुष्टत्वम् । अपार्थत्वादित्यवधारय । यदि च कमले व्योमीयत्वं पक्षतावच्छेदकीकृत्य सुरभित्वं साध्यते, तदाश्रयासिद्धिः । आश्रयविशेषणासिद्ध्या चाश्रयासिद्धिरसङ्कीर्णेति मणिकृताप्यभिधानात् । अत्र च पक्षतावच्छेदकाभावज्ञानं बाधान्तर्भूतमेव । तत्सामानाधिकरण्यस्य साध्ये ग्राह्यतया तत्रैव ग्राह्याभावावगाहितया तस्य प्रतिबन्धकत्वात् । न तु व्याप्यवत्त्वज्ञानेऽपीति परामर्शाविरोधित्वान्नासि-

द्वावन्तर्भाव इति मूढानां प्रलापो नादर्तव्यः । हेतुपक्षतावच्छेदकसामानाधिकरण्यस्य परामर्शेऽपि ग्राह्यतया हेतुमति पक्षतावच्छेदकाभावज्ञानस्य तत्र ग्राह्याभावज्ञानतया प्रतिबन्धकत्वात् । अत एव हेतुमति पक्षतावच्छेदकाभाव आश्रयासिद्धिः । पक्षतावच्छेदकवति हेत्वभाव स्वरूपासिद्धिरिति । यत्त्वाश्रयविशेषणं पक्षता, तस्यासिद्धिः सिद्धसाधनमेवाश्रयासिद्धिरिति । तन्न । सिद्धेर्ज्ञानगर्भलक्षणाभावेन हेत्वाभासत्वायोगात् । सिद्धिविषयसाध्यस्य च यज्ज्ञाने सत्यनुमितिप्रतिबन्धानियम इति हेत्वाभासलक्षणविरहादिति वदन्ति ।

मम तु प्रतिभाति — सिसाधयिषाविरहविशिष्टसाध्यं भवत्वाश्रयासिद्धिः ज्ञानगर्भलक्षणसद्भावेन हेत्वाभासश्च । न च *सिसाधयिषाविरहांशज्ञानस्याप्रतिबन्धकत्वाद् न तद्विशिष्टं साध्यं हेत्वाभास इति वाच्यम् । एवं सति व्यभिचारादेरपि हेत्वाभासत्वाभावप्रसङ्गात् । तदुपाधिघटकसर्वांशज्ञानस्य प्रतिबन्धकत्वाभावात् । साध्याभावांशनिश्चयीभूतत्वादेः स्वरूपसत एव तत्र प्रवेशात् । यथा चैवं सति व्यभिचारानुमित्युपहितस्योपाधेरिष्टापत्त्यादिविरहसहकृतस्य प्रतिकूलतर्कविषयस्य च न हेत्वाभासता, तथा ज्ञानविशेषगर्भहेत्वाभासलक्षणकरणादेवोपपादितम् । नह्युपाधौ हेत्वाभासत्वाभावव्यवहारवत् सिद्धिविषयेऽपि तथा व्यवहारोऽस्ति, येन तद्व्यावृत्तमपि हेत्वाभासत्वं वक्तव्यं स्यात् । यदि वा त(त्रा ? त्र) तथा व्यवहारः, तथापि पृथग् हेत्वाभासत्वाभावमादाय समर्थनीयः । आश्रयासिद्धावेवोक्तक्रमेणान्तर्भावादिति ।

ननु पर्वतो धूमवान् वह्नेरित्यादिव्यभिचारिणि विरुद्धे वा कथं व्याप्यत्वासिद्धिः । सा हि न यत्किञ्चिद्व्याप्तिविरहः, सद्धेतुसाधारण्यात् । किन्तु वह्निमन्निष्ठाभावाप्रतियोगिधूमसामानाधिकरण्याभावः । स च प्रतियोग्यप्रसिद्ध्या न संभवतीति चेद्, न । साध्ये हेतुसमानाधिकरणाभावाप्रतियोगित्वविशिष्टहेतुसामानाधिकरण्यस्य हेतुव्यापके प्रसिद्धस्याभावो व्याप्यत्वासिद्धिः । तस्य च विशेषणाद्यभाववद् ग्राह्याभावावगाहितया परामर्शप्रतिबन्धकज्ञानविषयत्वात् । न चैव-

१. 'द्धाभा'क. पाठः.

* 'सिसाधयिषा' इत्यकृतषत्वाः परश्शताः शब्दा इह प्रयुक्ताः । तेषां साधुत्वं कालापानुसारेण बोद्धव्यम् । ते हि साधधातुमषोपदेशं पठन्ति । किन्तु तत् षोपदेशलक्षणविरुद्धमिति माधवो दूषयति ।

मप्यवृत्तिव्याप्यत्वासिद्धिसङ्करो नेति वाच्यम् । तस्य विरुद्धत्वादिनैव सङ्ग्राह्यत्वादिति केचित् । वस्तुतो हेतौ साध्यप्रतियोगिकात्यन्ताभावासामानाधिकरण्यावच्छिन्नस्य सामानाधिकरण्यस्य च साध्यव्याप्ये प्रसिद्धस्याभावो व्याप्यत्वासिद्धिरिति नावृत्तिहेतुकाव्याप्तिशङ्का । नन्वेवमपि व्याप्यत्वासिद्धेर्व्यभिचाराद्यसङ्करो नास्तीति न पृथग् हेत्वाभासतेति चेद्, न। वस्त्वसाङ्कर्याभावेऽपि ज्ञानासांकर्यस्य सत्त्वात्। न च विशिष्टाभावरूपव्याप्यत्वाभावस्य विशेषणा(भावा)द्यन्यतरज्ञाननियतज्ञानतया न तदसङ्करोऽपीति वाच्यम्। विशेषणाद्यभावमज्ञात्वापि शब्दादिना विशिष्टाभावज्ञानसंभवेनासाङ्कर्यसंभवात्। वस्तुतस्तु — व्यर्थविशेषणत्वव्यर्थविशेष्यत्वस्थल एव व्याप्यत्वासिद्धेर्व्यभिचाराद्यसङ्करः । नहि नीलधूमे वह्निव्यभिचारो वह्न्यसहचारो वास्ति। ननु नीलधूमे यथा न व्यभिचारादिः, त(दा ? था) व्याप्त्यभावोऽपि नेति कथमेतदिति चेद्, इत्थं — वह्नित्वावच्छिन्ने नीलधूमत्वावच्छिन्नव्याप्तिप्रतियोगित्वाभावस्य धूमत्वावच्छिन्ने नीलधूमत्वावच्छिन्नव्याप्त्यभावस्यात्र विवक्षितत्वात् । तथा च नीलधूमत्वस्य व्याप्यतानवच्छेदकत्वाद् भवति तत्र व्याप्तिविरहः । नन्वेतज्ज्ञानं व्याप्तिधीविरोध्येव नेति चेद्, न । धूमत्वावच्छिन्नव्याप्तिज्ञाने तस्याविरोधित्वापादन इष्टापत्तेः । नीलधूमत्वावच्छिन्नव्याप्तिज्ञाने च विरोधित्वं तस्य वज्रलेपायितमेव । न चाव्यभिचरितसामानाधिकरण्यात्मकव्याप्तेः कथमनेन विघटनमिति वाच्यम् । व्यर्थविशेषणादिदूषकत्वानुरोधेन व्यधिकरणधूमवह्न्यादिसङ्ग्रहानुरोधेन च सामानाधिकरण्यावच्छेदकतद्धर्मवत्त्वं व्याप्तिरिति प्रागेवोक्तत्वात् । तज्ज्ञाने चावच्छेदकत्वाभावज्ञानस्य साक्षादेव विरोधित्वात् । यदि चावच्छेदकलक्षणैव व्याप्तिः, तदानुपपत्तिरेव नेति । यथा च नीलधूमत्वस्यानतिप्रसक्तत्वेऽपि तादृशलघुधर्मोपस्थितिकत्वान्नावच्छेदकत्वं, तथोपपादितम् । वक्ष्यते चाग्रे।

इदं त्ववशिष्यते — यथा व्याप्त्यभावज्ञानं पक्षधर्मत्वाभावज्ञानं वा परामर्शविघटकमिति तयोर्हेत्वाभासता, तथा तदुभयव्याप्यज्ञानमपि तद्विघटकमिति तद्विषयस्यापि हेत्वाभासतास्तु । बाधकाभावादिति ।

अत्र मिश्राः — व्याप्त्यादिविरहव्याप्यवत्ताधीः व्याप्त्यादिप्रत्यक्षविरोधितयानुमितिप्रतिबन्धिका व्याप्त्याद्यनुमितिविरोधितया वा । नाद्यः । प्रत्यक्षे ग्राह्याभावव्याप्यज्ञानस्याप्रतिबन्धकत्वाद् ग्राह्याभावप्रत्यक्षस्यैव तत्र प्रतिबन्धकत्वा-

---

१. 'नस्यासांक' क. पाठः.

दिति बहुशो निवेदितत्वात् । नान्त्यः । व्याप्तिव्याप्यपरामर्शासत्त्वे तदभावादेव कार्याभावेन प्रतिबन्धकत्वाभावात् । तत्सत्त्वे च सत्प्रतिपक्ष एवान्तर्भावात् पृथग् हेत्वाभासत्वासम्भवादिति वदन्ति ।

अत्र नव्याः — हेतुव्याप्त्यभावव्याप्यस्य हेतुव्याप्त्यनुमितौ सत्प्रतिपक्षत्वेऽपि हेतुना साध्यानुमितावसत्प्रतिपक्षत्वात्, साध्यानुमितौ साध्यविरहव्याप्यस्यैव सत्प्रतिपक्षत्वाद्, व्याप्तिविरहव्याप्त्यादेरनुमितौ परामर्शविघटकतया प्रतिबन्धकत्वेन साक्षात्प्रतिबन्धकत्वाभावेन सत्प्रतिपक्षत्वासम्भवादिति व्याप्त्यभावव्याप्त्यादेः साध्यानुमितौ पृथग् हेत्वाभासत्वे बाधकाभाव इति वदन्ति । तच्चिन्त्यम् । विरोधिव्याप्तिग्राहकसामग्र्या प्रतिरुद्धव्याप्तिग्रहत्वस्यासाधारणलक्षणतया तत्रैव व्याप्त्यभावव्याप्यस्यान्तर्भावेन पृथग् हेत्वाभासत्वायोगादिति मिश्राभिसन्धानात् । पक्षधर्मत्वाभावव्याप्यव्यावर्तनाय तु तथापि गत्यन्तरं चिन्तनीयमेवेति तु चिन्त्यम् ।

केचित्तु — यज्ज्ञाने सत्यनुमितिप्रतिबन्धनियमः, स एव हेत्वाभासः । अत एवोपाध्यादिर्न तथा । तथा च व्याप्त्यभावादिव्याप्ये गृहीतेऽपि प्रात्यक्षिकस्य व्याप्त्यादिज्ञानस्य सम्भवेनानुमित्युत्पादाद् न तयोर्हेत्वाभासत्वमिति वदन्ति । तदपि चिन्त्यम् । परामर्शोत्पत्त्यनन्तरं व्यभिचारज्ञाने सत्यप्यनुमित्यप्रतिबन्धकत्वात् तस्यापि हेत्वाभासत्वानापत्तेः । परामर्शात् पूर्वं यज्ज्ञाने सत्यनुमितिप्रतिबन्धनियम इत्युक्तौ च सत्प्रतिपक्षाव्याप्तेः । तस्मात् स्वप्रतिबध्यप्रतिबन्धद्वारा हेत्वाभासता । तच्च व्याप्त्यभावादिव्याप्यस्यास्त्येव । व्याप्त्याद्यनुमितिप्रतिबन्धकत्वादिति । वस्तुतस्तु — व्याप्त्यभावादिव्याप्यस्य करणविघटकत्वमापाद्यते हेत्वाभासत्वपर्यन्तमपि वा । आद्य इष्टापत्तिः । अन्त्ये ज्ञानविशेषविशेष्यत्वमिति हेत्वाभासलक्षणायोगादप्रसक्तिरेव, सिद्धसाधनोपाध्यादिवत् । (ननु) त(दा ? था) लक्षणमेव किमिति कृतं, येन व्याप्त्यभावादिव्याप्यं व्यावर्त्यत इति चेद्, न । स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हत्वात् । सत्प्रतिपक्षेतरस्यानुमितौ परामर्शे ग्राह्याभावानवगाहितया प्रतिबन्धकस्य हेत्वाभासत्वेनासङ्ग्रहात् । अत एव सिद्धसाधनोपाधिपक्षधर्मताभावव्याप्यव्याप्त्यभावव्याप्यप्रतिकूलतर्कविषयादीनां सर्वेषां व्युदास इति सङ्क्षेपः ॥

इत्यसिद्धिग्रन्थः ।

---

## अथ बाधग्रन्थः ।

बाधः साध्याभाववत्त्वप्रमाविषयपक्षकत्वमिति प्राञ्चः । तन्न । वृक्षः संयोगीत्यादावतिव्याप्तेः । केवलान्वयिसाध्याभावाप्रसिद्ध्या तद्धर्मबाधासिद्धेरबाधितत्वस्याभावप्रसङ्गात् । किन्तु पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वम् । अभावे च प्रतियोगिव्यधिकरणत्वं विशेषणम् । तेन न पूर्वोक्तातिव्याप्तिः । केवलान्वयिनि च बाधितत्वस्योक्तरूपस्यान्यत्र प्रसिद्धस्यान्यत्वमस्त्येवेति नाबाधितत्वव्या(पको ? कोपः।) न वा तदर्थकनिगमनवैयर्थ्यमिति ।

अत्र च पक्षे साध्याभावज्ञानदशायां हेतुर्ज्ञातश्चेद् व्यभिचारधीरेव । अथ न ज्ञातस्तदा कारणाभावादेव कार्याभावः । अथ हेत्वभावादवृत्तिस्तदा स्वरूपासिद्धिरिति बाधो न पृथग् हेत्वाभास इति पूर्वः पक्षः ।

तत्र कश्चित्—पर्वतो वह्निमान् धूमादित्यत्र सल्लिङ्गपरामर्शजन्यवह्न्यनुमितौ यत्र वह्न्यंशे उपनीतकाञ्चनमयत्वादिबाधितवस्तुभानं, तत्रा(सत्य ? )नुमितेरप्रमात्वम् । तच्च हेत्वाभासाधीनम् । न च व्यभिचारधीस्तत्रास्तीति काञ्चनमयवह्न्यभाव एव दोष इत्याह । तन्न । काञ्चनमयवह्नेरप्रसिद्ध्या तदभावासम्भवात् । काञ्चनमयत्वरूपव्यधिकरणधर्मावच्छिन्नवह्न्यभावमादाय बाधोपपादने(पु ? तु) तादृशव्यभिचारस्याप्युपपादयितुं शक्यत्वात् । किञ्चानुमितावुपनीतभानानङ्गीकारात् कथं काञ्चनमयत्वादिभानम् । अथानङ्गीकारमात्रं न वस्त्वभावसाधकम्, अतिप्रसङ्गात् । किन्तु प्रमाणाभावः । न चात्र सोऽस्ति । प्रत्यभिज्ञादौ तत्तादिभानानुरोधेनावश्यमुपनीतभानमङ्गीकरणीयम् । तत्र चोपनयस्य प्रत्य(क्ष)मात्रे सहकारिता वा मानमात्रे वेति संशये सामान्यादुत्तरपक्षस्यैव प्रबलत्वादनुमितावप्युपनीतभाने बाधकाभावादिति ।

अत्र मिश्राः—उपनयः प्रत्यक्षे सहकारी सन्निकर्षतया सम्भवति । अनुमाने सन्निकर्षस्यातन्त्रतया व्याप्तिपक्षधर्मतोपनीतार्थस्यैव विषयतयोपनीतभानाभावादिति वदन्ति ।

तत्र केचित्—प्रत्यक्षेऽपि ज्ञानं सन्निकर्षतया न हेतुः । किन्तु सविकल्पकानन्तरं प्रमाणजन्यज्ञानत्वावच्छेदेनासंस(र्गः ? र्गा)ग्रहे सति सविकल्पकविषयवैशिष्ट्यं भासत इति सामान्यत एव नियमात् तदुपयोगः । तच्चानुमानादिसाधारणमिति तत्राप्युपनीतार्थभाने बाधकाभाव इति ।

अत्रोच्यते — सामान्यनियमस्वीकारेऽपि तत्तादिप्रत्यक्षे तदिन्द्रियसन्निकर्षो वाच्य एव। (अ)सन्निकृष्टस्य प्रत्यक्षाविषयत्वात्। तथा च ज्ञानस्येन्द्रियसन्निकर्ष(जन्य ?)त्वमवश्यमभ्युपेयमेव। तथा च सामान्यनियमस्वीकारो गौरवपराहत इति। नन्वेवं लाघवोपनीतस्याप्यनुमितौ भानं न स्यादिति चेद्, न। सम्भवल्लघुगुरुविषयकमानत्वावच्छेदेनैव लाघवज्ञानस्य सहकारितया लाघवोपनीतस्य सर्वत्र भानसम्भवात्। उपनयान्तरस्य च तथात्वाभावादिति दिक्।

अत्रायं सिद्धान्तः — साध्याभावज्ञानप्रमात्वज्ञानं विना हेतुविषयकमपि साध्याभावज्ञानं प्रामाण्यशङ्काकबलितं न प्रतिबन्धाय समर्थम्। अतो व्यभिचारज्ञानत्वेनापि प्रतिबन्धकतायां साध्याभावज्ञानप्रमात्वज्ञानमवश्यमुपजीव्यम्। तथा च उपजीव्यतया तदेव दोषः। न च प्रमात्वज्ञानमपि साध्याभावविषयकतयैव दोषः, प्रमात्वस्य विषयघटितमूर्तितया तज्ज्ञाने तज्ज्ञाननियमादिति वाच्यम्। विषयघटितत्वेऽपि ज्ञाननिरूपितस्वरूपसम्बन्धविशेषविषयत्वस्यैव तत्र प्रयोजकत्वात्। साध्याभावविषयत्वस्याप्रामाण्यशङ्काकलङ्किततज्ज्ञानसाधारणतया प्रतिबन्धाप्रयोजकत्वात्। नन्वेवमप्रामाण्यशङ्काशून्यसाध्याभावज्ञानं प्रतिबन्धकमस्तु। न तु साध्याभावज्ञानप्रमात्वज्ञानमिति चेद्, न। अप्रामाण्यशङ्काशून्यत्वापेक्षया गृहीतप्रमात्वस्य लघुत्वात्। ननु गृहीतप्रमात्वसाध्याभावज्ञानस्य प्रतिबन्धकत्वे यत्र प्रमात्वज्ञान एवाप्रमात्वशङ्का, तत्रापि प्रतिबन्धापत्तिः। न च तत्रापि गृहीतप्रमात्वप्रमात्वज्ञानत्वेन प्रतिबन्धकता। तर्हि तत्राप्येवमेवेत्यनवस्थापातः। तस्मादनन्यगत्या क्वचिद्गत्वा अप्रामाण्यशङ्काशून्यत्वमनवस्थाभिया वक्तव्यम्। तर्हि प्रथममेव तदस्तु। किं प्रमात्वज्ञानप्रतिबन्धकत्वेनेति नायं सिद्धान्तो युक्तिसह इति चेद्, न। साध्याभावज्ञानस्य हेतुविषयकतानियमाभावेन बाधस्य व्यभिचारसाङ्कर्यासम्भवात्। परामर्शानन्तरं स्मृत्या शब्देन वा यत्र साध्याभावोपस्थितिस्तत्र हेतूपस्थापकाभावात्। न च परामर्शानन्तरमनुमितिसामग्रीबल(व)त्त्वादनुमितिरेव, न तु साध्याभावस्मृत्यादिकमिति वाच्यम्। यत्र पूर्वक्षणे सिद्ध्यादिप्रतिबन्धकसत्ता, तत्रानुमित्यनुदयेन स्मृत्यादिसम्भवात्। किञ्च, यथा व्यभिचारधीः प्रतिबन्धिका, तथा साध्याभावधीरपि। ग्राह्याभावज्ञानस्य शाब्दादौ प्रतिबन्धकत्वकल्पनात्। न चैवं साधारणप्रतिबन्धकस्यापि तया न हेत्वाभासता। साधारणप्रतिबन्धकस्यापि हेत्वाभासलक्षणसत्त्वेन तत्त्वे बाधकाभावाद् हेतुनिष्ठत्वेनासाधारण्य-

सम्भवाच्च। वस्तुतः परामर्शपूर्वं साध्याभावविषयः व्यभिचारज्ञानत्वेन प्रतिबन्धकत्वसम्भवेऽपि तदुत्तरं तत्त्वेन प्रतिबन्धकत्वमसम्भवि। व्यभिचारज्ञानस्य करणविघटकतया दोषत्वात्। अत एव करणे परिपूर्णे किमसिद्ध्येति हेत्वाभासलक्षणे मिश्रैरुक्तम्। तस्मात् परामर्शोत्तरसाध्याभावज्ञानस्यानुमितौ ग्राह्याभावविषयकत्वेनैव विरोधिता, न व्यभिचारज्ञानत्वेन। तत्प्रतिबध्यस्य परामर्शस्योत्पन्नत्वात्। न च तत्र परामर्शेऽप्रामाण्यशङ्का साध्याभावज्ञानेनाधीयत इति वाच्यम्। अप्रामाण्यशङ्कायाः कोट्युपस्थित्याद्यनियमेनानावश्यकत्वाद्, बाधाप्रतिबन्धकत्वेऽप्रामाण्यशङ्काकाल एवानुमितिप्रसङ्गाच्च। न च संशयसामग्र्या बलवत्त्वात् तत्र संशय एव, न त्वनुमितिरिति वाच्यम्। प्रत्यक्षे तथाभावेऽप्यनुमितौ तस्याः प्रतिबन्धकत्वे मानाभावात्। प्रत्युत भिन्नविषयकानुमितिसामग्र्याः सर्वज्ञानसामग्र्यपेक्षया बलवत्त्वाद् अनुमितिरेव भवेद् यदि बाधो न प्रतिबन्धकः। किं बहुना, एवं सति सत्प्रतिपक्षेऽपि परामर्शाप्रामाण्यशङ्कैवाधीयतामिति सोऽपि हेत्वाभासो न स्यात्। कोट्याद्यनुपस्थित्या संशयकालानुमित्यापत्त्या च तस्य पृथक् प्रतिबन्धकत्वमङ्गीक्रियते यदि, तदा बाधेऽपि मात्सर्यमुत्सार्य दृष्टिराधीयतामित्यलं वाचालतया।

मणिकृतस्तु — व्याभिचारेण सह न बाधस्य साङ्कर्यनियमः। पर्वतो वह्निमान् इत्यनुमितौ पक्षधर्मताबलाद् धूमेन वह्निः पर्वतीयः साध्यते यत्र, तत्र महानसीयवह्नेरेव सिद्धिः कुतो न स्याद् यदि बाधो न प्रतिबन्धकः। नहि वह्नौ साध्ये धूमस्य व्यभिचारोऽस्ति। न च पर्वतीयधूमस्य महानसीयवह्निना सह व्यभिचार एव। महानसीयवह्नित्वेन साधने तथात्वेऽपि वह्नित्वेन साधने तदभावात्। साध्यतावच्छेदकावच्छिन्नसाध्याभावसामानाधिकरण्यस्य व्यभिचा(रि ? र)-त्वात्। तस्मात् तत्र महानसीयवह्न्यादिभानं बाधेनैव प्रतिरुध्यत इति वदन्ति।

अत्र वदन्ति — यदि पर्वते महानसीयादिवह्निभानं, तदानुमितिरयथार्था स्यात्। न च भवदीयप्रयोजनक्षतिरकिञ्चित्करी, सामग्रीतः कार्यावश्यकत्वादिति वाच्यम्। सत्यलिङ्गपरामर्शस्य प्रमानुमितावेव योग्यतया तेनाप्रमानुमितेर्जनयितुमशक्यत्वात्। नहि शालिबीजाद् यवाङ्कुरः संभाव्यतेऽपि। यदि च नैवं, तदा बाधप्रतिबन्धकत्वाङ्गीकारेऽपि महानसीयवह्नित्वेन बाधावतारात् तेन रूपेणानुमितिविषयता मास्तु। वह्नित्वेन बाधानवतारात् तेन रूपेण वह्नि(मान् ? भानं)

दुर्वारमेव । न च बाधस्य समानविषयकतया प्रतिबन्धकत्वाद् महानसादिवह्निर्न केनापि रूपेण भासत इति वाच्यम् । एवं सति प्रमेयत्वेन विश्वं जानतो घटत्वादिना संशयादिकं न स्यात् । तथा चानुभवविरोध इति ।

अत्राहुः—न सत्यलिङ्गपरामर्शस्य प्रमानुमितिजनकतानियमः । घटः सकर्तृकः कार्यत्वादित्यत्र लाघवभ्रमादेककर्तृकत्वविषयानुमितौ सत्यपरामर्शे सत्यपि प्रमात्वाभावात्, कूटलिङ्गजानुमितौ विषयाबाधेन सत्यपरामर्शं विनापि प्रमात्वाच्च । तस्मादबाधितत्वप्रमाभ्रमौ तत्प्रमाप्रमा(त्व)प्रयोजकौ । अत एव प्रतिबन्धकाभावत्वेनानुमित्यादौ बाधाद्यभावः प्रयोजकः, न त्वबाधितत्वादिज्ञानमित्यपास्तम् । गुणानुरोधेनाबाधितत्वज्ञानस्यानुमित्यादौ हेतुत्वात् । यच्चोक्तं—समानविषयकत्वेन बाधस्य प्रतिबन्धकत्वे मेयत्वप्रकारकघटादिज्ञानानन्तरं घटत्वादिना संशयादि न स्यादिति । तदपि न । लाघवेन समानविषयकत्वेन बाधस्य प्रतिबन्धकत्वसिद्धौ संशयादिविषयभिन्नस्यैव प्रमेयत्वेन ज्ञानं जातमिति कल्पनात् । अन्यथा समानप्रकारकतापक्षेऽपि भूतले घटो नास्तीति ज्ञानेऽपि घटत्वं भूतलाश्रितवृत्तीति ज्ञानस्य दुर्वारत्वापातात् । अत एव समानविषयकत्वेन प्रतिबन्धकतापक्षे पर्वतातिरिक्तवृत्तिवह्निः पर्वते नास्तीति ज्ञानानन्तरं धूलीपटले धूमभ्रमा(त्य ? द् अन्य)भ्रमानुमितिर्न स्यात् । वह्न्यन्तरे बाधावतारात् । पर्वतीयवह्नेर्बा(ध ? धित )त्वेनाविषयत्वात् । तस्मात् समानप्रकारकत्वेन प्रतिबन्धकत्वमङ्गीकरणीयमिति वह्नित्वेनाबाधितस्यैव वह्नेस्त(त्रा ? त्र) भानमिति नि( स्तरं ? रस्तम् ) । तत्रापि वह्नित्वेन वह्निभिन्नस्यैव पर्वतीयरूपादेर्भानादिति ।

इदं तु शङ्क्यते—यत्र वह्निभिन्ने वह्नित्वं नास्ति, पक्षान्यवह्निश्च पक्षे नास्तीति धीः, तत्र भ्रमानुमितिः कथं स्यात् । विषयस्य वह्न्यवह्निसाधारणस्य बाधितत्वावगमादिति ।

अत्रेदं तत्त्वं—समानप्रकारकत्वेन विरोधपक्षेऽपि इदम्पर्वतत्वादिना निश्चये पर्वतत्वादिना वह्न्यादिसंशयः स्यात् । तथा च निष्कम्पप्रवृत्त्यादिविरोधः । भूतले घटो नेति ज्ञानानन्तरं भूतलं घटवदिति ज्ञानापत्तिश्च । तस्मादुक्तयुक्त्या लाघवेन च समानविषयत्वेन प्रतिबन्धकत्वे सिद्धे पर्वतान्यवह्निः पर्व(तो ? ते) नास्तीत्यादिबाधोऽनुमितिविषयवह्निमवह्निं वा न गोचरयतीति कल्प्यते । अत एव व्यतिरेकिणि यत्र घटे इतरभेदनिश्चयः, तत्र पृथिवीत्वेनापि रूपेण

संशयो न युज्यत इत्यभिप्रेत्यैव मणिकृतोक्तं — 'यद्वा घटादिभिन्नपृथिवीत्वेन पक्षते'ति। अत एव च केवलान्वयिनि प्रमेयत्वं घटनिष्ठाभावप्रतियोगि न वेत्यादिसंशयः पक्षताघटक उक्तः। समानविषयसंशयत्वेन साध्यसिद्धिनिवर्त्यत्वात्। अन्यथा समानप्रकारकतापक्षे तदसङ्गतेः। वस्तुतस्तु समानविषयत्वेन प्रतिबन्धकत्वमित्युत्सर्गः। स च यावद्विषयबाधेन बाधकेनापोद्यते। तथा च यत्र यावद्विषये विशिष्य बाधग्रहेऽपि सामान्यतो ज्ञानं, तत्रागत्या समानप्रकारकत्वेन प्रतिबन्धकत्वेऽपि लाघवेनोक्तयुक्त्या समानविषयत्वेनैव प्रतिबन्धकत्वमिति विषयविभागः। अत एव पर्वतान्यवह्निः पर्वते नेति ज्ञाने वह्निभिन्ने वह्नित्वं नेति ज्ञाने च भवति वह्न्यनुमितिर्वह्नित्वेन रूपेण बाधितवह्निविषयिण्येवेति न काचिदनुपपत्तिरिति। केचित्तु — गुणानुरोधादत्र परामर्शात् प्रमेत्यसङ्गतमेवेति महानसीयादिवह्निभानं भवेदेवेति समानविषयकत्वेनैव बाधप्रतिबन्धकत्वमङ्गीकार्यम्। न च सत्यपरामर्शस्वभावादेव महानसीयादिवह्निधीर्नेत्येव न कुत इति वाच्यम्। महानसीयादिवह्निभानेऽप्यनुमितौ प्रमात्वसंभवात्। वह्नित्वेन रूपेण महानसीयवह्नेः पर्वते भानात्। यत्र यद्धर्मावच्छिन्नयदभावः, तत्र तद्धर्मावच्छिन्नतज्ज्ञानस्य भ्रमत्वादिति। तच्चिन्त्यम्। यत्र यदस्ति, तत्र तज्ज्ञानस्य प्रमात्वात्। न च पर्वते महानसीयवह्निर्वह्नित्वेनापि रूपेणास्ति। तस्मादत्र तज्ज्ञानं भ्रमरूपं भवतु मा वा। प्रमारूपं (न) भवतीति निश्चितमेवेति न तदनुरोधात् समानविषयकत्वेन प्रतिबन्धकत्वसिद्धिरिति दिक्।

अन्यच्च बाधासङ्कीर्णस्थलान्तरमुक्तं मणिकृता — 'गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादि'त्यादि। नहि तत्र पृथिवीत्वे गन्धव्याप्यताविरहो न वा पक्षधर्मताविरह इति बाध एव तत्र प्रतिबन्धकोऽसङ्कीर्ण इति।

तत्र केचिद् — गन्धप्रागभावविशिष्टघटस्य पक्षत्वे तत्र गन्धाभावेन हेतोश्च सत्त्वे व्यभिचार एव। हेतोरसत्त्वे चासिद्धिरेव। न च गन्धप्रागभावोपलक्षि(ता ? तस्य पक्षत्वम्।) तदा तत्र साध्य(स्य) सिद्धत्वेन सिद्धसाधनमेव, न तु बाध इत्यसङ्गतमिदमिति।

अत्राहुः — गन्धप्रागभावकाल एवात्र विशेषणतया पक्षतावच्छेदकत्वेन विवक्षितः। तद्विशिष्टे च घटेऽस्ति पृथिवीत्वं हेतुरिति नासिद्धिः, न वा सिद्धसाधनं, तद्विशिष्टे साध्यासत्त्वात्। अतस्तत्र बाध एव प्रतिबन्धक इति।

अत्र नव्याः — प्रागभावोपलक्षितकालस्य पक्षतावच्छेदकत्वे तद्विशिष्टघटे गन्धवत्त्वस्य सिद्धत्वात् सिद्धसाधनमेव, न बाधः । प्रागभावविशिष्टकालस्य पक्षतावच्छेदकत्वे तादृशकालविशिष्टे पृथिवीत्वहेतोरसिद्धिरेव । प्रागभावांशे तदसत्त्वादिति नैतद्बा(ध ? धा)सङ्कीर्णस्थलमुक्तमिति ।

अत्र प्रतिभाति — प्रागभावः स्वाधारकालविशेषपरिचायकः । तथा च कालविशेषविशिष्टो घटः पक्षः, तत्र पृथिवीत्वं हेतुरस्त्येवेति नासिद्धिर्न वा सिद्धसाधनं, तद्विशिष्टे गन्धाभावादिति बाध एव तत्र दोष इति न किञ्चिदेतत् । अत एव प्रागभावकालावच्छिन्नघटे गन्धरूपसाध्याभावेन हेतोश्च सत्त्वेन व्यभिचार एवात्र, न तु बाध इत्यपि दूषणमपास्तम् । पृथिवीत्वगन्धयोर्ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धस्य समवायतया तत्सम्बन्धावच्छिन्नहेतुमति तत्सम्बन्धावच्छिन्नसाध्यस्यापि सत्त्वेन व्यभिचाराभावात् । ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धेन हेत्वधिकरणे तत्सम्बन्धारोप्यकसाध्याभावस्यैव व्यभिचा(रि ? र) त्वात् । अन्यथा धूमाधिकरणेऽपि समवायादिना वह्न्यभावेन व्यभिचारप्रसङ्गादिति । यच्चात्र दूषणं — पक्षधर्मताबलाद् अनुमितौ साध्यादिभानं, सा च पक्षे हेतुस्तत्र साध्यं विनानुपपन्न इत्याकारेति पक्षीयसाध्यभाने पक्षतावच्छेदकसाध्यसामानाधिकरण्यमर्थादनुमितिविषय इति प्रकृतेऽपि प्रागभावकालीनत्वसामानाधिकरण्येन घटे गन्धः सिध्यत्येवेति नात्र बाधगन्धोऽपीति । तदपि न । पक्षतावच्छेदकविशिष्टे साध्यसिद्धेरौत्सर्गिकत्वात् । बाधेनैव तस्य बाधनात् । अत एव पर्वतो वह्निमानित्यादावपि पर्वतत्वाद्यंशेऽपि साध्यसिद्धौ बाधः प्रतिबन्धक एव । किं बहुना, प्रमाणमात्रस्यैव विशिष्टवैशिष्ट्यान्वयबोधजनकतायामुत्सर्गः । अत एवारुणया गवेत्यादावारुण्यादिविशिष्टगोरेव सोमक्रयसाधनत्वमिति सिद्धान्तः । वस्तुतस्तु वृक्षः संयोगी द्रव्यत्वादित्यादावव्याप्यवृत्तिसाध्यके सद्धेतौ साध्याभावप्रदेशे साध्यसिद्धिर्यत्र न भवति, तत्र बाध एव प्रयोजकः । प्रतियोगिविरुद्धसाध्याभावसहचारस्य व्यभिचारतया तत्र तदभावात् । अत एव व्याप्तिलक्षणे पक्षधरमिश्रैरिदमपि बाधासङ्कीर्णस्थलमित्युक्तम् । किञ्च, पक्षतावच्छेदकवति साध्याभावरूपस्य बाधस्य व्यभिचारसङ्करेऽपि साध्यवति पक्षतावच्छेदकाभावज्ञानस्य न व्यभिचारज्ञानसाङ्कर्यम् । साध्याभा(व ? वा)ज्ञानेन तत्र तद्धर्म्यव्यभिचाराज्ञानात् । अन्यच्च ज्ञानासाङ्कर्यं प्रागुक्तमेवास्तीति नेह वितन्यत इति संक्षेपः ॥

इति बाधग्रन्थः ।

---

## अथ हेत्वाभासानामसाधकतासाधनम् ।

हेत्वाभासानामसाधकतासाधकतया सदुत्तरत्वम् । जात्यादीनां चै(स्य ? स्वा)साधकतासाधारण्येन परासाधकतासाधकतया असदुत्तरत्वम् । यद्यप्युद्देश्यपरानुमितिप्रतिबन्धो व्यभिचारादिज्ञानादेवेत्यसाधकतानुमितिर्व्यर्था, तथाप्यसाधकतानुमानेनात्यन्तापकर्षः प्रतिवादिनः सूच्यत इति कथकसम्प्रदायसिद्धस्यासाधकत्वसाधनस्याप्युद्देश्यत्वामिति तदपि कार्यम् । न चैवमितरानुमानवदत्रापि पञ्चावयवप्रयोगः किमिति न क्रियत इति वाच्यम् । अत्र दूषणस्यासाधकत्वव्याप्तेः वादिप्रतिवाद्युभयसम्मततया दूषणस्यासाधकत्वव्याप्तिर्मास्त्विवति शङ्कोत्थापने व्याघातेन च व्याप्त्युपदर्शकावयवस्य व्यर्थत्वादिति वदन्ति । वस्तुतस्तु कथकसम्प्रदायो यत्र यादृशः, तत्र तथा प्रयोग इत्येव मूलयुक्तिरनुसन्धेया । अन्यथा पक्षधर्मत्वाबाधितत्वादिबोधकयोरुपनयनिगमनयोः करणं कुतोऽत्र न स्यादिति तत्त्वम् । असाधकत्वं चोद्देश्यानुमितिप्रतिबन्धकतावच्छेदकधर्मवत्त्वमेव । स च धर्मो विरुद्धत्वादिरेव । न चैवमिदमसाधकं विरुद्धत्वादित्यादौ साध्याविशेष इति वाच्यम् । रूपान्तरेणैकस्यापि साध्यसाधकभावाविरोधात् । इदं पिपासोपशमनसमर्थतावच्छेदकरूपवत् तोयत्वादित्यादिवत् । समानप्रकारकसिद्ध्यादेरेव प्रतिबन्धकत्वेन साध्याविशेषदोषप्रयोज्यदोषस्यासम्भवादिति दिक् ॥

इति हेत्वाभासानामसाधकतासाधनम् ।

इति श्रीगोपीनाथविरचिते मणिसारेऽनुमानखण्डः ।

शुभं भूयात् ।

---

१. 'चास्य' क. पाठः.

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | २८ | यद्य | यद्वा व्य |
| ६ | १७ | भव्यं | (न) भव्यं |
| ७ | ३ | सिद्धिनै | सिद्धिरे |
| ९ | १४ | जनक | जनन |
| ११ | २४ | (वा) | (वत्वा) |
| १४ | २२ | दक | दक (विशिष्ट) |
| २२ | ११ | रिति | रिति(न) |
| २७ | १६ | त्मत्व | त्म |
| ,, | १७ | त्वमसमानाधिकर-णात्म(त्व) | त्वसमानाधिक-रणात्म |
| ४० | ८ | श्रा | (?) श्रा |
| ५३ | २४ | सम्बन्धि (क ?) | (स) सम्बन्धिक |
| ५९ | २५ | सुरभित्वा | सुरभि(त्व)त्वा |
| ६४ | ३ | त्वे | त्वैं |
| ७१ | ७ | च । ला | च ला |
| ,, | १७ | रनेक | रेक |
| ७३ | ,, | राय | राय (?) |
| ७७ | ,, | पक्षता | पक्ष (धर्म) ता। |
| ८९ | ९ | बाभिन्ने ए | वो भिन्न ए |
| ९५ | १७ | कप्त | क्लृप्त |
| १२३ | १६ | (ज्ञान ज्ञान ?) | ज्ञान (ज्ञान ?) |